विरमेद्दिने हनूमदुपदेशान्तं रावणाय तृतीयके ॥ शेषं चतुर्थे काण्डस्य दिवसे संपठेत्सुधीः । अष्टाविंशतैवं दिनैर्व्रतमिदं चरेत् ॥ सप्तकृत्वोऽथवा काण्डमष्टघ्या दिनैः पठेत् । दिनेदिने पठेत्सर्गान्सप्तैव विधिपूर्वकम् ॥ अष्टषष्टितमे काण्ड पूर्णं स्यात्सप्तसर्गतः । चतुरावृत्ति वा पाठ्यमष्टाविंशतिवासरैः ॥ प्रत्यहं पठितव्यास्स्युर्दशसर्गा विधानतः । अष्टविंशे दिने काण्डं पूरयेत् शिष्टसर्गतः ॥ अथवा तु द्विरावृत्ति पठेत्काण्डं प्रयत्नतः । दिनैश्च सप्तदशभिः प्रत्यहं चाष्टसर्गतः ॥ एषु कल्पेषु सर्वेषु समाप्तिदिवसे प्रभो । राज्यपट्टाभिषेकाख्यं पठेत्सर्गं प्रयत्नतः ॥ यथाविभवमर्यादं कारयेदुत्सवं तथा । प्रत्यहं पठनात्पूर्वं परं च विनिवेदयेत् ॥ पयस्सशर्करं तप्तं ताम्बूलं च फलानि च । भोज्या विप्रा यथाशक्ति समाप्तौ द्विगुणं भवेत् ॥ सर्वथा यस्त्वशक्तस्स्यादेषु कल्पेषु भूसुरः । सकृत्सुन्दरकाण्डं तु पठेत्प्रयतमानसः ॥ एकाह्ना यः पठेत्प्रातस्समारभ्यापराह्णतः । प्रागेव पूरयेत्काण्डमव्यग्रपदमुच्चकैः ॥ तस्य पुण्यफलं वक्तुं नैव शेषोऽपि शक्नुयात् ॥ तत्राप्यशक्तो द्विदिनं पठेत्काण्डं हितसिद्धये ॥ अंगुलीयकदानात्प्रागाद्येऽहनि विरामयेत् । समापयेत् द्वितीयेह्नि फलं तस्याप्यनन्तकम् ॥ अथवाऽऽद्यो तु दिवसे पठेद्रावणदर्शनम् । द्वितीयेऽशोकवनिका भङ्गात्प्राग्विरमेत्सुधीः ॥ तृतीये पूरयेत्काण्डं विधिरेष ह्यनुत्तमः । एवं त्रिषु दिनेष्वेव महात्पारायणे फलम् ॥ अथवाऽऽद्य हनुमताऽऽसीतादर्शनतः पठेत् । द्वितीये त्रिजटास्वप्नकथना तं पठेद्दिने ॥ चूडामणिप्रदानान्तं तृतीये दिवसे पठेत् । लङ्कादाहा तमेव स्याच्चतुर्थे पठनं दिने ॥ पञ्चमे पूरयेत्काण्डमिति पञ्चदिनैर्विधिः । पठेद्वा प्रत्यहं सर्गान्समारभ्य भृगोर्दिने । नन्वैव पुनरावृत्तो भृगोर्वारेऽवशेषितान् । पञ्चसर्गान्पठित्वैव पठेत्पट्टाभिषेचनम् ॥ एवमष्टदिनैरेष विधिः श्रीकामिनां वरः । प्रथमे वञ्चपाठ्यास्स्युर्द्वितीये सर्गका दश ॥ तृतीये पञ्चषट्तुर्ये सप्तसर्गास्तु पञ्चमे । षष्ठे तु सप्तसर्गास्स्युस्सप्तमे द्वादशैव तु ॥ अष्टमेऽष्टदिने पाठ्याः नवमे चाष्टसर्गकाः । विधिरेष महान्प्रोक्तो नवभिर्दिवसैः कृतः ॥ निवेदयेत् शर्करान्नं घृताक्तं प्रथमे दिने । अपूपान्पायसं चापि द्वितीये विनिवेदयेत् ॥ तृतीये तु तिलान्नं स्याच्चतुर्थे शष्कुलीद्वयम् । दध्यन्नं पञ्चमे दद्यात्षष्ठे दद्यात्तु मोदकान् ॥ नानाविधफलान्येव दद्यात् घस्रे तु सप्तमे । सूपान्नमष्टमे दद्यान्नवमे ससितं पयः ॥ अस्मिन् व्रते प्रवचनं कृतं चेदुत्तमोत्तमम् । व्रतमन्यत्प्रवक्ष्यामि शृणु पार्वति कामदम् ॥ दिनेदिने तु षट्सर्गाः दिनैकादशकं पठेत् । द्वादशे शिष्टसर्गौ द्वौ पठित्वा भक्तिपूर्वकम् ॥ विभीषणाभयकरं तत्सर्गद्वयं सपठेत् । रावणेः कुम्भकर्णस्य रावणस्य वधाश्रयम् ॥ ततस्सर्गद्वयं पाठ्यं ततो रामाभिषेचनम् । दिनैरेवं द्वादशभिर्व्रतमेतदनुत्तमम् ॥ आचरन्नर्चयेद्रामं नाम्नां सहस्रतोऽन्वहम् । रात्रौ तु प्रथमे यामे कृतं प्रवचनं यदि ॥ महाफलं व्रतमिदं ह्यनुमन्येत राघवः । द्व्यहं द्वौ पठेत्सर्गौ द्वात्रिंशत्या तु वासरैः ॥ त्रयोविंशे पञ्चसर्गान् चतुर्विंशे तु त्रीन्पठेत् । पञ्चविंशे तु षट्पाठ्याः षड्विंशे त्रय एव च ॥ सप्तविंशे तु चत्वारः प्राप्तेऽष्टाविंशके दिने । अवशिष्टान्पठित्वा त्रीन्दशाननवधं ततः । पट्टाभिषेकं कुर्यात्तु यथाविभवविस्तरम् । एषु सर्वेषु कल्पेषु यद्यशक्तो यथासुखम् ॥ पठित्वा रचयेद्रामपट्टाभिषवमुत्सवम् । मुमुक्षुर्भवपाथोधिं तरितुं यदि वाञ्छति ॥ पठेत्तु प्रथमं सर्गं प्रातरेव ऋतुत्रयम् । भूतवेतालकूष्माण्डपिशाचादिग्रहैः कृताम् ॥ पीडामपानुदन् लङ्काविजयं सर्गमापठेत् । बुद्धिमान्द्यापाकर्तुं हनुमच्चिन्तनं पठेत् ॥ पारदारिकतादोषशान्तये हनुमत्कृतम् । रावणात्तः पुरे सीताऽन्वेषणं प्रयतः पठेत् ॥ सीतादर्शनसर्गन्तु वायुपुत्रेण यः पठेत् । कुबेर इव नित्यश्रीर्भूत्वा मोदेत भूतले ॥ पठेत्तु त्रिजटास्वप्नं दुःस्वप्नापनिवृत्तये । सत्वाभिवृद्धिकामस्तु सीतया रावणस्य च ॥ पठेत्सर्गद्वयं वादं भारं न्यस्य रघूत्तमे । विश्लिष्टबन्धुभिस्सद्यः पुनस्संयोगमिच्छता ॥ सीताहनुमतोस्सर्गाः पाठ्यास्संवादकात्मकाः । अंगुलीयार्पणं सर्गं पठेदापत्प्रशान्तये ॥ मन्त्याऽमत्या च रामस्य कृतानां विविधागसाम् । प्रशान्तये पठेत्सर्गं काकानुग्रहकारकम् ॥ आनन्दरूपब्रह्मावबोधेप्सुता यदि चेन्नृणाम् । चूडामणिप्रदानाख्यः पाठ्यस्सर्गो हनूमते ॥ शत्रूणां जयकामस्तु रक्षसां हनुमत्कृतम् । निधनं किङ्करादीनां प्रयतः प्रपठेत्सर्गे । धर्माभिवृद्धिकामास्तु रावणाय हनूमता । सन्देशकथनं धर्म्यं पठेयुर्भक्तिपूर्वकम् ॥ गृहरामादिवृद्ध्यर्थं लङ्कादाहं पठेद्यतः । पठेन्मधुवनध्वंसं वानरैः कृतमादरात् ॥ क्षुत्पिपासात गोब्रह्मलोकेशान्तस्सुखं वसेत् । रामात्य हनुमत्प्रोक्तं सीतासन्देशमदतः ॥ पठन्नामरणं मुक्तिमुक्ती रामात्प्रपद्यते । अशोक-

प्रसङ्गवश रामायण सुन्दरकाण्डके पारायणका विधान—

उमोवाच—काण्डस्य सुन्दराख्यस्य महात्म्यं तु महेश्वर । श्रोतुमिच्छामि ते वक्त्रात् विस्तरश्च विशेषतः ॥ श्रीमहेश्वर उवाच—श्रीमत्सुन्दरकाण्डस्य महात्म्यमतिगोपितम् । वक्ष्यामि शृणु ते प्रीत्या संग्रहेण गिरीन्द्रजे ॥ विस्तारद्वक्तुमीशस्तत्स एव रघुनन्दनः । यथा सर्वेषु देवेषु श्रीरामः परमोमतः ॥ यथा सर्वेषु वृक्षेषु कल्पवृक्षोह्यनुत्तमः । यथा सर्वेषु रत्नेषु कौस्तुभः श्लाघ्यते वरः ॥ तथा रामायणे श्रीमान्सुन्दरःकाण्ड उत्तमः । पठनाच्छ्रावणादस्य भक्त्या प्रवचनादपि ॥ सिध्यन्ति सिद्धयस्सर्वाः अनर्थश्च विनश्यति । पूर्यन्ते सम्पदस्सर्वाः नश्यन्ति सकला गदाः ॥ विशेषतो महारोग भीतानां परमौषधम् । यक्ष्मापस्मारकुष्ठाद्या अनिवार्या महौषधैः ॥ अमुष्य पठनादष्टषष्टिकृत्वो विधानतः । प्रणश्यन्ते न सन्देहः श्रीरामकरुणावशात् ॥ योगी—शृणु वक्ष्यामि राजेन्द्र यथोक्तं संविधत्व च । निर्माय मण्डपं दिव्यं कदलीनारिकेलकैः ॥ मुक्ताद्यैश्च वितानेनाप्यलंकृत्य यथाविधि । निर्माय वेदिकां तत्र चतुरस्रां मनोरमाम् ॥ अहतेन च पट्टेन शुक्लेनाच्छाद्य तां पुनः । व्रीहीन् षट्प्रस्थमात्रान्वै तत्रादौ सन्निवेश्य च ॥ तदर्धान् तण्डुलान् शुभ्रान् क्षिप्त्वा तदुपरिक्रमात् । अष्टादशपलस्वर्णा निर्मिते विस्तृतास्यके ॥ मौक्तिकानि समापूर्य पात्रे तत्स्वर्णपट्टतः । अच्छाद्य तत्र च पलस्वर्णानिर्मितपट्टके ॥ लिखित्वा श्रीराममन्त्रं नवावरणसंयुतम् । यथाविधि प्रतिष्ठाप्य पूजयित्वा यथाविधि ॥ हैमीं कृत्वाऽत्र प्रतिमां सीतारामाञ्जनेयकाम् । अर्चयित्वा रामनामसहस्रेणाम्बुजैर्वरैः ॥ तुलस्या माल्लिकाभिर्वा चम्पकैः केतकीदलैः । तत्सन्निधौ प्रयतहृत श्रीमद्रामायणोदितम् ॥ काण्डं श्रीसुन्दराभिख्यं पठेदव्यग्रमानसः । प्रातर्मुहूर्तात्परतः समारभ्य प्रसन्नधीः ॥ सूर्ये गते व्योममध्यं विरमेत्पाठतोऽम्बुतः । पठेदनुदिनं चाष्टषष्टिकृत्वो यथा भवेत् ॥ अखण्डदीपं प्रज्वाल्य घृतवर्तिसमन्वितम् ॥ श्रोतारं कल्पयित्वा च भक्तं श्रीरामपादयोः ॥ पूजयेच्च पुनारामं पाठान्तेऽपूपपायसैः । समाप्य प्रथमावृत्तिं विप्रान् द्वादश पूजयेत् ॥ अथ द्वितीयावृत्त्यादि समाप्तौ श्रद्धया द्विजान् । एकैकाधिक सङ्ख्याका-भाजये-मधुपायसैः ॥ अष्टषष्टिदिनैरष्ट षष्ठिराद्यत्तयो यदि । श्रीमत्सुन्दरकाण्डस्य समाप्येरन् तदुत्तमम् ॥ यदि मासैश्चतुर्भिस्तु समाप्येताथ मध्यमम् । षड्भिर्मासैस्समाप्यते यदि स्यादधमं स्मृतम् ॥ उत्तमं तत्स्मृतं यत्तु यजमानः स्वयं पठेत् । विप्राद्वारा मध्यमं स्यात्पठेयुर्बहवो यदि ॥ अधमं तत्त सम्प्रोक्तं पाठस्य क्रम ईरितः । अष्टषष्टितमावृत्तौ समाप्तायां यथाक्रमम् । पठित्वा युद्धकाण्डञ्च पञ्चभिष्षड्भिरेव वा । दिनैः पट्टाभिषेकाख्यं रामस्योत्सवमाचरेत् ॥ अष्टषष्टितमावृत्तौ आरब्धायां यथाक्रमम् ॥ आयुद्धकाण्डसम्पूर्तिं सायङ्काले दिने दिने पूर्वाह्न पठितान्सर्गान्भक्तिपूर्वं प्रवाचयेत् । वक्तारं कल्पयित्वाऽथ सर्वशास्त्रार्थपारगम् ॥ श्रीरामभक्तिनिरतं पूजयित्वा द्विजोत्तमम् । शृणुयाद्रामचरितस्यार्थान् रस्यानत्तमान् ॥ एवमस्मिन् व्रते चीर्णे प्रसीदति रघूत्तमः । अश्विभ्यामपि ये रोगा असाध्यास्सुर्निवारणे । ते सद्यो नाशमेष्यन्ति दीर्घमायुश्च बिन्दते । विरोधः पुत्रमित्राद्यैरानुकूल्येन शाम्यति ॥ कुटुम्बकलहोऽजीर्यत्व-पमृत्युश्च नश्यति ॥ ऋणबाधा प्रशाम्येच्च शत्रूणां च जयो भवेत् । बहुना किमिहोक्तेन सर्वास्सिध्यन्ति सिद्धयः ॥ व्रतमेतच्चाष्टषष्टिकृत्वो यस्त्वा चरिष्यति । भवेयुर्वशगास्तस्य अणिमाद्यष्टसिद्धयः । वैराग्यवान् व्रतमिदं भक्त्या यश्चाचरिष्यति । तं सुग्रीवमिव प्रीत्या राघवस्संलपिष्यति ॥ वक्तृत्वे पठितृत्वे च द्विज एवाधिकारवान् । श्रवणेऽधिकृतास्सर्वे वर्णाश्चत्वार एव च ॥ शूद्रैर्देवालये कार्यमन्यैर्द्विजगृहेऽपि वा । देवालये वा संकल्प्य चरितव्यमिदं व्रतम् ॥ किमुक्तेनेह बहुना व्रतमेतत्कालौ नृणाम् । अर्पणे सर्वकामानां कल्पवृक्षायते ध्रुवम् ॥ पुनर्वक्ष्यामि गिरिजे शृणुत्वमवधानतः । एवं कर्तुमशक्तानां विधानानि बहूनि च ॥ सान्ति तान्यथ वक्ष्यामि लोकानां हितकाम्यया । पठेत् द्वात्रिंशदावृत्तिं काण्डं श्रीसुन्दराभिधम् । चूडामणिप्रदानान्तं प्रथमे दिवसे पठेत् । काण्डसंपूर्तिपर्यन्तं द्वितीये दिवसे पठेत् ॥ एवं द्वात्रिंशदावृत्तिं चतुष्षष्ट्या दिनैः पठेत् । चतुर्विंशति कृत्वो वा द्वासप्ततिदिनैः पठेत् ॥ सीतादर्शनसर्गान्तं प्रथमे दिवसे पठेत् । द्वितीयेऽशोकवनिकाभङ्गान्तं प्रयतः पठेत् ॥ तृतीये दिवसे काण्डं पठित्वा पूरयेत्सुधीः । एवं द्वासप्ततिदिनैः व्रतमेतत्समापयेत् ॥ अष्टाचत्वारिंशदह्ना द्वादशावृत्ति वा पठेत् । सीतादर्शनसर्गान्तं प्रथमे दिवसे पठेत् ॥ सोऽवतीर्येति सर्गात्प्राक् द्वितीये

स्वर्गीय-महामहोपाध्याय अस्मत्पितृचरण पण्डित विद्याधरशास्त्रि गौड स्मारक—

भारतीय-कर्मकाण्ड-मण्डल की ६९ पुष्पलता

(पञ्चम-स्कन्ध)

# श्रीमद्भागवत भाषाटीका

[ 'सरस्वती' भाषाटीका और 'प्रकाश' टिप्पण से अलंकृत ]

संपादक—श्रीरामदयालचुन्नीलालसंस्कृतमहाविद्यालय वेद-कर्मकाण्डप्रधानाध्यापक श्रीदौलतरामगौड

विष्णुरुवाच—शृणु त्वं भो ! सुरवर स्कन्धं चैव चतुर्थकम् । तत्र मे ह्यदरं प्रोक्तं सकुचीकं महामते ॥ चतुर्थश्रवणे नैव कृतघ्नो मुक्तिमाप्नुयात् । इतिहासं मम मुखोच्चरितं त्वमघनाशकृत् ॥ मथुरायां पुरा कश्चिन्नाम्ना राजा परन्तपः । धर्मशास्त्रानुसारेण प्रजापालनतत्परः ॥स कदाचिन्मृगयासक्तो वनं गत्वा मृगानहनत् । रात्रि तस्मिन्मृगासक्ते सन्ध्याकालोऽभवत्तदा॥ततः परतरं राजा द्विजाश्रममुपेयिवान् । सुदेवस्याश्रमे राजा सप्तरात्रं व्यवस्थितः ॥ आतिथ्यमकरोद् राज्ञो यथाविधि महामुनिः । पञ्चमे दिवसे रात्रौ राजा दष्टोऽहिनामृतः ॥ प्रभाते तं मृतं दृष्ट्वा सैन्यं दुःखसमन्वितम् । ऋषिर्जलं मन्त्रयित्वा ह्यभिषेकं चकार ह ॥ समुत्थितोऽभून्नृपतिर्निद्रापाये यथा पुमान् । सैन्यं दृष्टोत्थितं भूयं हर्षमाप तथा मुनिः ॥ मुनिकर्म तु सैन्येन प्रोक्तं नृपतये तदा । राजा तमहंया- मास ततो गन्तु प्रचक्रमे ॥ आगत्य मथुरापुर्य्यां कालिन्दीनिकटे मखम् । चकार विधिना तत्र सुदेवोऽपि समागतः ॥ सुदेवमागतं दृष्ट्वा न बभाषे यदा नृपः । तदा मुनिर्गत स्थानं निःश्वस्य क्रोधमूर्च्छितः ॥ तेन दोषेण तद्यागो निष्फलत्वमगात्तदा । देवैरुक्ता नृपतये यज्ञे विफलतां विधे ॥ चिन्तासक्तः समाहूय विप्रापप्रच्छ तन्नृपः । केन पापेन भो विप्रा नष्टं यज्ञफलं मम ॥ इति श्रुत्वा विचार्याशु विप्रैरुक्तमिदं हि तम् । महापापस्य करणाद्द्वोपो जायते नृणाम् ॥ स एव हि कृतघ्नस्य सञ्जातस्ते नृपात्मजे । एवमुक्त्वा गता विप्रा राजा चाण्डालतां गतः ॥ कुष्ठकान्तस्तु तद्दहो बहुकीटादिभिर्युतः । बभूव शृणु भो ब्रह्मंस्ततश्चक्रे नृपोऽटनम् ॥ कदाचिद्दैवयोगेन कुरुक्षेत्रमुपेयिवान् । तत्र भागवती गाथा चतुर्थस्कन्धसंभवा ॥ तेन श्रुता देवलाच्च ततः पापचयो गतः । विमानमारुह्य गतो वैकुण्ठं तनुमुज्जहत् ॥ अतो भागवतीयां वै कीर्तिं को वक्तुमर्हति ॥

( मत मतान्तरोंसे भगवान् श्रीकृष्णजीको जन्म-पत्रियाँ )







## [ यन्त्रनाश–प्रायश्चित्तम् ]

मवरत्नेश्वरे— यदि प्रतिष्ठितं यन्त्रं दैवाद्देवि विनश्यति । उपोषणमहोरात्रमादरेण समाचरेत् ॥ येन स्वर्णादिना यन्त्रं द्रव्येण परिनिर्मितम् । विलिख्य यन्त्रं तत्पात्रे देवतां परिपूजयेत् ॥ उपचारैः षोडशभिः शक्तितः सुसमाहितः । अयुतं प्रजपेन्मन्त्रं पूजयित्वा यथाविधिः ॥ विलोड्य तत्तोयं मन्त्री पीत्वा भक्षणमाचरेत् । तावत्कालं ब्रह्मचर्ययावद्यन्त्रं समाहरेत् ॥ पुनर्यन्त्रं नवं चान्यदाहरेत् श्रद्धयान्वितः । आहृत्य तु पुनर्यन्त्रं प्रतिष्ठां च समाचरेत् ।

## [ पूजाकाले यन्त्रादिपतनप्रायश्चित्तम् ]

यन्त्रं यदि पतेद्देवि पूजाकाले कदाचन । लिङ्गं वापि शिलां वापि तत्फलं शृणु पार्वति ॥ आयुर्हानिर्धनंहानिर्बन्धुनाशस्तथैव च । भवतीति विनिश्चित्य प्रायश्चित्तमथाचरेत् ॥ त्रिरात्रमेकरात्रं वा उपवासमथाचरेत् । मूलमन्त्रं जपेद्देवि सहस्रं साष्टकं तथा । जवापुष्पैर्जुहुयाच्च शतमष्टोत्तरं तथा । ब्राह्मणान्भोजयेच्छक्त्या भक्तिनम्रसमाहित ॥

## [ मालानाश–प्रायश्चित्तम् ]

माला यदि पतेद् हस्तात्तथा चैव विनश्यति । सहस्रं तत्र सञ्जप्यं ब्राह्मणान्भोजयेत्ततः ॥ भोजनं ब्राह्मणानान्तु सर्वानिष्टस्य नाशनम् । गायत्रीं वा जपेत्साष्टशतं भक्त्या समाहितः ॥ ततोऽपरां नवां मालां तज्जातीयां वरानने । गृह्णीयात्तु कृते चैवं न विघ्नैरभिभूयते ॥ इत्यादि ।

( भगवान् का दासी को श्रेष्ठ वरदान )

एकदा रघुनाथस्तु पञ्चकोपरि संस्थितः । मुखात्ताम्बूलस्य रसं प्रथमं दोषकारकम् ॥ त्यक्तुकामो न ददर्श पात्रं निष्ठीवनस्य सः । तस्यान्तिकस्थिता दासी नाम्नी वै सगुणेति च ॥ ताद्दशो राममालोक्य पात्रं दूरं विलोक्य च । कृत्वा पात्रं स्वहस्ताभ्यामञ्जलावेव तद्रसम् ॥ रामेण मुक्तमास्थाच्च जग्राह वेगवत्तरा । ततः सा प्राशनं रामोच्छिष्टं दासि चकार तत् ॥ महाप्रसादं तं मत्वा दैवाल्लब्धं विचिन्त्य च । तदाऽतितुष्टः श्रीरामस्तस्यैतत्कर्मणाऽब्रवीत् ॥ वरयस्व वरं दासि यत्ते मनसि वर्तते । तद्रामवचनं श्रुत्वा दासी प्राह रघूत्तमम् ॥ एकपत्नीव्रतं ते[illegible] साम्प्रतं त्विह जन्मनि । जन्मान्तरे त्वया सङ्गं वाञ्छामि रघुनायक ॥ ततस्या वचनं श्रुत्वा राघवो वाक्यमब्रवीत् । यदाग्रे कृष्णरूपेण गोकुलेऽवतराम्यहम् ॥ तदा राधेतिनाम्नी त्वं गोपपत्नी भविष्यसि । तदा मयाचिरं क्रीडां त्वं मोक्ष्यसि न संशयः । तदा ममाऽति प्रीता त्वं गोपिकासु भविष्यसि ॥ ( आनन्दरामायण )

( दान से कृष्णरूपमें पुनः प्राप्त )

यज्ञान्ते स्वर्णजां सीतां ददौ स्वगुरवे प्रभुः । ए ं यज्ञशतेष्वत्र गुरवे शतमूर्तयः ॥ याः समर्पिता रामेण तासां दानफलेन हि । षोडशस्त्रीसहस्रेभ्यश्चोर्ध्वं स्त्रीणां शतं पुनः ॥ कुरुक्षेत्रां कृष्णरूपो विवाहेनोद्वहिष्यति ।

( भगवान्ने कृष्णावतार में उन कामातुर स्त्रियोंकी इच्छाओंको पूर्ति करना स्वीकार किया )

अथैकदा देवपत्न्यो ज्ञात्वाऽरण्यां विदेहजाम् । परस्परं ताः संमन्त्र्य निशीथे राघवं प्रति ॥ समाजग्मुर्दिव्यवस्त्ररत्नाभरणभूषिताः । रामसौन्दर्यसंभ्रान्ताः कामबाणप्रपीडिताः ॥ दृष्ट्वा रामदूतास्ते पप्रच्छ रक्षणस्थिता । यूयं किमर्थं संप्राप्ता निशीथेऽत्र भयावहे । कथयध्वं हि नः सर्वं मा शंकां कुरुताऽत्र हि । ता ऊचु राघवं द्रष्टुं समायाता वयं स्त्रियः ॥ अधुना [illegible] दर्शनं न भविष्यति । जातो वधरतदाऽस्माकं जीवीतम्य नदीजले ॥ इति तासां वचः श्रुत्वा दूतास्ते राघवं जवात् । दास्या निवेदयामासुः स्त्रीवृत्तं तत्सविस्तरम् ॥ श्रुत्वा दासीमुखाद्रामः सैकते मञ्चके स्थितः । समाहूय स्त्रियः सर्वा ददर्श रघुनायकः ॥ ताश्चापि दृष्ट्वा श्रीरामं मेनिरे कृतकृत्यताम् । ततस्ता राघवं नत्वा लज्जयाऽधोमुखाः स्त्रियः ॥ पीडिताः कामबाणैश्च तस्थुः श्रीरामसन्निधौ । तः पप्रच्छ राघवोऽप्यागमनस्याऽथ कारणम् ॥ ता राघवं तदा प्रोचुः सर्वं वेत्सि त्वमीश्वरम् । ज्ञात्वा तासां रामचन्द्रो हृद्गतं प्राह ताः पुनः ॥ एकपत्नीव्रतं ऽमेऽस्ति चैत जन्मनि भो स्त्रियः । न ज्ञेयं मे मृषावाक्यं गम्यतां स्वस्थलं जवात् ॥ मा भूदधर्मो मद्राज्ये राज्ञां वै निरयप्रदः । इति राघववाग्बाणैर्भिन्नमर्मस्थलाः स्त्रियः ॥ ययुर्मूर्छां क्षणादेव सिकतायां सहस्रशः । ता मूर्छा विह्वलं दृष्ट्वा रामो विह्वलमानसः ॥ नारीः सन्तोषयन्प्राह हेनार्यः श्रूयतां मम । वाक्यं खेदापहं वोऽथ द्वापरे कृष्णरूपधृक् ॥ अहं व्रजे भविष्यामि नन्दगोपेन पालिते । तदा देवास्तु गोपाला भावि मद्वरदानतः ॥ भविष्यन्ति सुरेशश्च नन्दस्तत्र भविष्यति । भविष्यथ तदायूयं गोपिकाः सकला व्रजे ॥ युष्माकं पूरयिष्यामि यथेच्छं वाञ्छितं तदा । रासक्रीडां हि युष्माभिः करिष्यामि न संशयः । वृन्दावने तु कालिन्द्यां सैकते निशि वै चिरम् । भवध्वं स्वस्थचित्ताश्च गच्छध्वं स्वस्थलं यदा ॥ इति रामवचोरूप सुधया जीविताः स्त्रियः । किञ्चित्तुष्टहृदो रामं नत्वा जग्मुर्निजं स्थलम् ॥

माननेवालोंके प्रिय भक्तिमुख जाननेवाले भगवान् असत्पुरुष मनुष्योंकी पूजा ग्रहण नहीं करते। जो शास्त्र, धन, कुल तथा कर्मों के मदसे निर्धन सज्जनोंका तिरस्कार किया करते हैं ॥ २१ ॥ स्वयं पूर्ण भगवान् अपना अनुसरण करनेवाली लक्ष्मी सकाम भक्त, राजा और देवताओंको भी अपने सेवकोंके वशमें होकर स्वीकार नहीं करते। फिर जो मनुष्य कृतज्ञ होगा, वह भक्त इन भगवान्को कैसे छोड़ सकेगा ? ॥ २२ ॥ मैत्रेयजीने कहा—हे राजन्, ब्रह्माके पुत्र मुनिनारदजी इसप्रकारकी और भी भगवान्की कथाएँ सुनाकर ब्रह्मलोकको चले गये ॥ २३ ॥ तथा प्रचेता भी नारदके मुखसे निकले हुए, संसारके मैलको दूर करनेवाले भगवानके यशको सुनकर उन्हींके चरणोंका ध्यान करते हुए विष्णुलोकको पहुँच गये ॥ २४ ॥ हे विदुरजी, जो आपने नारद तथा प्रचेताओंका हरिकीर्तनरूप संवाद मुझसे पूछा था, यह मैंने आपसे कह दिया ॥ २५ ॥ शुकदेवजीने कहा—हे नृपश्रेष्ठ, मनुके पुत्र उत्तानपादका मैंने यह वंश वर्णन किया है। अब प्रियव्रतके वंशका वर्णन करता हूँ। उसे आप सुनिये ॥ २६ ॥ जो प्रियव्रत नारदसे आत्मविद्या प्राप्त करके पुनःपृथ्वीका राज्य भोगकर फिर उसे पुत्रोंको

द्रुपदपतीन् विबुधश्च यत्स्वपूर्णः ॥ न भजति निजभृत्यवर्गतन्त्रः कथममुमुद्विसृजेत्पुमान्कृतज्ञः ॥ २२ ॥ मैत्रेय उवाच । इति प्रचेतसो राजन्याश्च भगवत्कथाः ॥ श्रावयित्वा ब्रह्मलोकं ययौ स्वायंभुवो मुनि ॥ २३ ॥ तेऽपि तन्मुखनिर्यातं यशो लोकमलापहम् ॥ हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययुः ॥ २४ ॥ एतत्तेऽभिहितं क्षत्तर्यन्मां त्वं परिपृष्टवान् ॥ प्रचेतसां नारदस्य संवादं हरिकीर्तनम् ॥ २५ ॥ श्रीशुक उवाच ॥ य एष उत्तानपादो मानवस्यानुवर्णितः । वंशः प्रियव्रतस्यापि निबोध नृपसत्तम ॥ २६ ॥ यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ॥ भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात्पदम् । २७ । इमां तु कौषारविणोपवर्णितां क्षत्ता निशम्याजितवादसत्कथाम् ॥ प्रवृद्धभावोऽश्रुकलाकुलो मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः ॥२८॥ विदुर उवाच ॥ सोऽयमद्य महायोगिन्भवता करुणात्मना ॥ दर्शितस्तमसः पारो यत्राकिंचनगो हरिः ॥ २९ ॥ श्रीशुक उवाच ॥ इत्यानम्य तमामन्त्र्य विदुरो गजसाह्वयम् ॥ स्वानां दिदृक्षुः प्रययौ ज्ञातीनां निर्वृताशयः ॥ ३० ॥ एतद्यः शृणुयाद्राजन् राज्ञां हर्यर्पितात्मनाम् ॥ आयुर्धनं यशः स्वस्ति गतिमैश्वर्यमाप्नुयात् ॥३१॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां चतुर्थस्कन्धे प्राचेतसोपाख्यानं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥ समाप्तोऽयं चतुर्थस्कन्धः ॥ ४ ॥

बाँट करके भगवान्के पदको प्राप्त हुए ॥ २७ ॥ विदुरजीने मैत्रेयजीसे वर्णित भगवान्की इस सत्कथाको सुनकर अत्यन्त भक्तिभावसे आँसुओंसे युक्त होकर मैत्रेयके चरणोंको सिरसे तथा भगवान्के चरणोंको हृदयसे धारण किया ॥ २८ ॥ तथा विदुरजीने कहा—हे महायोगिन्, आज दयालु आपने यह अन्धकाररूपी संसारका पार मुझे दिखा दिया है, जहाँपर इच्छारहित मनुष्य भगवान्का गान करते हैं ॥ २९ ॥ शुकदेवजीने कहा—इसप्रकार उनको प्रणाम करके तथा उनसे आज्ञा लेकर विदुरजी अपने बन्धुओंको देखनेकी इच्छासे हस्तिनापुरको चले गये ॥ ३० ॥ हे राजन्, भगवान्में मन लगानेवाले राजाओंके इस चरित्रको जो सुनता है, वह आयु, धन, यश, कल्याण, गति तथा ऐश्वर्यको प्राप्त करता है ॥ ३१ ॥

इकतीसवें अध्यायका सार—तदनन्तर प्रचेता भगवानके वचनोंका स्मरण करते हुए घरसे निकले और समुद्रके किनारे जाकर आत्मविचार करने लगे। उसी अवस्थामें उन्हें नारदजीने देखा और उनके समीपमें आए तथा उनकी प्रार्थनापर पुनः उन्हें आत्मज्ञानका उपदेश देनेके बाद ब्रह्मलोकको चले गये तथा प्रचेता भी भगवान्का स्मरणकरते हुये सद्गतिको प्राप्त हो गये। इकतीसवाँ अध्याय समाप्त ॥

चतुरता, नानाप्रकारके विचारोंका सामर्थ्य, तीक्ष्ण बुद्धि, बल तथा इन्द्रियोंकी पटुतासे क्या फायदा है ॥ ११ ॥ योग, ज्ञान, संन्यास, स्वाध्याय तथा अन्य भी अनेक प्रकारके कल्याण करनेवाले कार्योंसे क्या लाभ है ॥ १२ ॥ वस्तुतः सम्पूर्ण फलोंकी अवधि आत्मलाभ ही है और सम्पूर्ण प्राणियोंकी आत्मा तथा आत्मप्रद प्रिय भगवान् ही हैं ॥ १३ ॥ जैसे वृक्षकी जड़का सिञ्चन करनेसे उसके स्कन्ध, भुजा, शाखा तथा पत्र पुष्पादि तृप्त होते हैं और भोजन करनेसे इन्द्रियाँ तृप्त होती हैं, वैसे ही भगवान्‌की पूजा करनेसे समस्त पूजित होते हैं ॥१४॥ जैसे वर्षाकालमें जल सूर्यसे ही गिरता है तथा गर्मीमें उसीमें प्रविष्ट होता है एवं चल और अचल जितने प्राणी हैं वे पृथ्वीसे होकर उसीमें पुनः लीन हो जाते हैं, वैसे ही यह चेतन तथा अचेतन सारा संसार भगवान्‌में ही लीन होता तथा उन्हींसे उत्पन्न होता है ॥ १५ ॥ यह संसार भगवान्‌का सबसे श्रेष्ठ स्थान है। यह सूर्यकी कान्तिके समान कभी प्रकाशित होता है और

तपसा वा किं वचोभिश्चित्तवृत्तिभिः ॥ बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ ११ ॥ किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि ॥ किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः ॥ १२ ॥ श्रेयसामपि सर्वेषामात्मा ह्यवधिरर्थतः ॥ सर्वेषामपि भूतानां हरिरात्मात्मदः प्रियः ॥१३॥ यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ॥ प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥ १४ ॥ यथैव सूर्यात्प्रभवन्ति वारः पुनश्च तस्मिन्प्रविशन्ति काले ॥ भूतानि भूमौ स्थिरजङ्गमानि तथा हरावेव गुणप्रवाहः ॥१५॥ एतत्पदं तज्जगदात्मनः परं सकृद्विभातं सवितुर्यथा प्रभा ॥ यथाऽसवो जाग्रति सुप्तशक्तयो द्रव्यक्रियाज्ञानभिदाभ्रमात्ययः ॥१६॥ यथा नभस्यभ्रतमःप्रकाशा भवन्ति भूपा न भवन्त्यनुक्रमात् ॥ एवं परे ब्रह्मणि शक्तयस्त्वमू रजस्तमः सत्वमिति प्रवाहः ॥१७॥ तेनैकमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् ॥ स्वतेजसा ध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा ॥ १८ ॥ दयया सर्वभूतेषु सन्तुष्ट्या येनकेन वा ॥ सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ १९ ॥ अपहतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः ॥ निजजनवशगत्वमात्मनोऽयन्न सरति छिद्रवदक्षरः सतां हि ॥२०॥ न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः ॥ श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिञ्चनेषु सत्सु ॥२१॥ श्रियमनुचरतीं तदर्थिनश्च

कभी लीन। जैसे जागने पर इन्द्रियाँ प्रकाशित होती हैं और सोजानेपर इनकी शक्तियाँ भी सुप्त हो जाती है। इन्हीं भगवान्‌से इन्द्रियों द्वारा द्रव्य, क्रिया और ज्ञान एतदात्मक तीन तरहके अहङ्कारके कार्यों तथा उनके निमित्तभूत भेद भ्रमका नाश होता है ॥ १६ ॥ हे प्रचेताओं, जैसे आकाशमें कभी मेघोंसे अन्धकार तथा कभी प्रकाश होता है वैसे ही ये समस्त शक्तियाँ क्रमसे परब्रह्ममें उत्पन्न होती हैं और पुनः उसीमें लीन हो जाती हैं। यही सत्त्व, रज एवं तम रूप इस संसारका प्रवाह हैं ॥ १७ ॥ इसलिए समस्त प्राणियोंकी आत्मा काल, प्रकृति और पुरुषरूप परमेश्वरको अभेददृष्टिसे साक्षात् भजो। जिन्होंने अपने तेजसे संसारके गुण प्रवाहको नष्ट कर दिया है ॥ १८ ॥ समस्त प्राणियोंमें दया करनेसे, जो कुछ प्रारब्धवश प्राप्त हो एकमात्र उसीसे सन्तोष करनेसे, तथा समस्त इन्द्रियोंको शान्त रखनेसे भगवान् शीघ्र प्रसन्न हो जाते हैं ॥ १९ ॥ सकल कामनाओंके नष्ट हो जानेसे शुद्ध चित्त सज्जनोंके मनमें निरन्तर बढ़ी हुई भक्तिसे बुलाये गये भगवान् अपने भक्तकी अधीनताको प्रकट करते हुए आकाशके समान उसके हृदयसे पृथक् नहीं होते ॥ २० ॥ निर्धन तथा भगवान् ही मन धन

# ❀ अथैकत्रिंशत्तमोऽध्यायः ❀

[ दक्षको राज्य देकर प्रचेताओंका वनमें जाना तथा मुक्तिको प्राप्त करना ]

मैत्रेयजीने कहा—राज्य सुख भोगनेके पश्चात् प्रचेताओंको ज्ञान उत्पन्न हुआ और वे भगवान्‌के वचनोंका स्मरण करते हुए अपने पुत्रको अपनी स्त्री सौंपे शीघ्र ही घरसे
निकल पड़े ॥ १ ॥ और पश्चिमदिशामें समुद्रके किनारे, जहाँ पर जाजलि नामके सिद्ध ऋषि हो चुके हैं, वहाँ समस्त प्राणियोंमें आत्मबुद्धि करके आत्मविचाररूपी यज्ञका उन्होंने सङ्कल्प
किया ॥ २ ॥ तब प्राण, मन, वाणी, नेत्र तथा आसनको जीतकर शान्त और सीधे शरीरसे बैठे एवं परब्रह्ममें आत्माको लगाये हुए उन प्रचेताओंको देव तथा असुरोंके पूज्य नारदजीने
देखा ॥ ३ ॥ तदनन्तर वहाँ आये हुए नारदजीको देखकर वे लोग उठकर खड़े हो गये और उन्हें प्रणाम किया। उनका अभिनन्दन करके विधिवत् पूजन करने के बाद सुखपूर्वक बैठे

**मैत्रेय उवाच। तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् ॥ स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥ दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा ॥ प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः ॥ २ ॥ तान्निर्जितप्राणमनोवचोदृशो जितासनान् शान्तसमानविग्रहान् ॥ परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः ॥३॥ तमागतं त उत्थाय प्रणिपत्याभिनन्द्य च। पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ॥ ४ ॥ प्रचेतस ऊचुः ॥ स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः ॥ ५ ॥ यदा दिष्टं भगवता शिवेनाधोक्षजेन च ॥ तद्गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो ॥६॥ तन्नः प्रद्योतयाध्यात्मज्ञानं तत्वार्थदर्शनम् ॥ येनाञ्जसा तरिष्यामो दुस्तरं भवसागरम् ॥ ७ ॥ मैत्रेय उवाच ॥ इति प्रचेतसां पृष्टो भगवान्नारदो मुनिः। भगवत्युत्तमश्लोक आविष्टात्माऽब्रवीन्नृपान् ॥ ८ ॥ नारद उवाच ॥ तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ॥ नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः ॥ ९ ॥ किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः ॥ कर्मभिर्वा त्रयीप्रोक्तैः पुन्सोऽपि विबुधायुषा ॥ १० ॥ श्रुतेन**

हुए उनसे कहने लगे ॥४॥ प्रचेताओं ने कहा—हे सुरर्षे, आपका स्वागत है, आज बड़े भाग्यसे हमलोगोंको आपका दर्शन हुआ है, हे ब्रह्मन्, आपका घूमना मनुष्योंको अभय देनेवाला
होता है जैसा कि सूर्यका ॥ ५ ॥ हे प्रभो, जो ज्ञान आपने, शिवने तथा भगवान्‌ने कहा था, वह घरमें आसक्त रहनेवाले हमलोगोंका प्रायः विस्मृत हो गया है ॥ ६ ॥ इसलिए आप
तत्त्वार्थदर्शन करानेवाले उस आत्मज्ञानको प्रज्वलित कीजिए, जिससे हमलोग इस दुस्तर संसार-सागरको सरलतासे पार कर सकें ॥ ७ ॥ मैत्रेयजीने कहा—जब प्रचेताओंने नारदजीसे
इसप्रकार पूछा तो भगवान् नारदजी भगवान्‌में मन लगाकर प्रचेताओंसे कहने लगे ॥ ८ ॥ नारदजीने कहा—मनुष्योंका वही जन्म, वे ही कर्म, वही आयु वही मन तथा वही वाणी
सफल है, जिससे यहाँ संसारकी आत्मा भगवान् हरिकी सेवा की जाय ॥ ९ ॥ जिनमें आत्मप्रद भगवान् नहीं हैं, उन शुद्ध माता पिताके द्वारा उत्पत्ति, उपनयन तथा दीक्षासे होनेवाले
तीनों जन्मोंसे क्या फायदा ? तथा वेदमें कहे गये कर्मोंसे कौन सा मतलब सिद्ध है और मनुष्यकी देवताओंके समान बड़ी आयुसे ही क्या लाभ है ॥ १० ॥ शास्त्र, तपस्या, वचनोंकी

देखकर अत्यन्त कोपित हुए ॥४४॥ हे राजन्, तब प्रचेता लोग क्रोधके कारण लतादिसे रहित पृथ्वीको करनेके लिए मुखसे अग्नि तथा वायुको ऐसे छोड़ने लगे, जैसे प्रलयकालमें भगवान् रुद्र अपने मुखसे छोड़ते हैं ॥ ४५ ॥ तदनन्तर उन वृक्षोंको भस्म होते देखकर पितामह ब्रह्माजी वहाँपर आये और प्राचीनबर्हिके पुत्रोंको उन्होंने शान्तियुक्त वचनोंसे समझाया ॥४६॥ वहाँपर जो वृक्ष जलनेसे बच थे, उन लोगोंने भयभीत होकर ब्रह्माकी आज्ञासे अपनी कन्या प्रचेताओंको अर्पित कर दी ॥ ४७ ॥ प्रचेताओंने भी ब्रह्माकी आज्ञासे मारिषा नामकी उस

**मुञ्चन्मुखतो रुषा ॥ महीं निर्विरुधं कर्तुं संवर्तक इवात्यये ॥ ४५ ॥ भस्मसात्क्रियमाणांस्तान्द्रुमान्वीक्ष्य पितामहः ॥ आगतः शमयामास पुत्रान्बर्हिष्मतो नयैः ॥ ४६ ॥ तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा ॥ उज्जह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयंभुवा ॥ ४७ ॥ ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे ॥ यस्यां महदवज्ञानादजन्यजनयोनिजः ॥ ४८ ॥ चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते ॥ यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥ ४९ ॥ यो जायमानः सर्वेषां तेजस्तेजस्विनां रुचा ॥ स्वयोपादत्त दाक्ष्याच्च कर्मणां दक्षमब्रुवन् ॥ ५० ॥ तं प्रजासर्गरक्षायामनादिरभिषिच्य च ॥ युयोज युयुजेऽन्यांश्च स वै सर्वप्रजापतीन् ॥ ५१ ॥ इति श्रीमद्भागवते म० पु० च० त्रिंशोऽध्यायः ॥ ३०**

कन्याके साथ विवाह किया, जिसमें शङ्करके अपमानसे ब्रह्माके पुत्र दक्षका जन्म हुआ ॥ ४८ ॥ चाक्षुष मनवन्तर आनेपर पूर्व शरीरके काल द्वारा नष्ट हो जानेके बाद ईश्वरसे प्रेरित होकर जिसने इष्ट प्रजाओंको उत्पादित की थी, वह दक्ष उत्पन्न हुआ ॥ ४९ ॥ उत्पन्न होते ही उसने समस्त तेजस्वियोंके तेजको अपनी कान्तिसे ढक दिया कर्ममें कुशल होनेके कारण इसे महर्षि लोग दक्ष कहते थे ॥ ५० ॥ ब्रह्माने उसका अभिषेक करके प्रजाके सर्ग तथा रक्षामें उसे नियुक्त किया । तदनन्तर दक्षने भी मरीचि आदि अन्यान्य प्रजापतियोंको नियुक्त किया ॥५१॥

तीसवें अध्यायका सार—विदुरजीने कहा—हे मैत्रेयजी, प्रचेताओंने तपस्या करके कौन सी सिद्धि प्राप्त की । मैत्रेयजीने कहा—प्रचेता लोग समुद्रके जलमें दस हजार वर्षों-तक तपस्या करते रहे । बादमें भगवान् प्रसन्न होकर उनके पास आये और कहने लगे—वर माँगो । हम तुम्हारे ऊपर प्रसन्न हैं । तब प्रचेता लोग हाथ जोड़कर भगवान्की स्तुति करने लगे । तदनन्तर उन्होंने भगवान्के भक्तोंका सङ्ग हो, सिर्फ यही वरदान माँगा । भगवान् भी यह वर देकर वहाँसे चले गये तथा प्रचेता लोग भी जलसे निकले और पृथ्वी पर अनेक वृक्षोंको उत्पन्न हुए देखकर उन्हें जलाने लगे । तब ब्रह्माने आकर उन्हें समझाया और वृक्षोंकी कन्या मारिषाके साथ उनका विवाह करा दिया, जिससे दक्षका जन्म हुआ । तीसवाँ अध्याय समाप्त ॥

आपके सर्वोत्तम भक्तोंका सङ्ग हो ॥ ३३ ॥ जब आपमें सङ्ग करनेवाले भक्तके एक क्षणके सङ्गके बराबर मोक्ष तथा स्वर्गको हम नहीं समझते जब भला मनुष्योंके राज्यभोगादि सुखोंको कैसे उसके साथ तुलना करें ॥ ३४ ॥ जिस सत्सङ्गमें पापको नाश करनेवाली कथाएँ होती हैं, जिसके सुननेसे तृष्णाकी शान्ति होती है तथा जहाँ प्राणियोंमें किसी तरहका वैर-भाव नहीं रहता है और न किसी तरहका उद्वेग ही रहता है ॥ ३५ ॥ जिस सत्सङ्गमें होनेवाली सत्कथाओंमें सङ्गसे अलग रहनेवाले प्राणी संन्यासियोंके आश्रय साक्षात् भगवान् नारायणकी बार-बार स्तुति किया करते हैं ॥ ३६ ॥ अपने चरणोंद्वारा तीर्थोंको पवित्र करनेकी इच्छासे पृथ्वीमें विचर रहे आपके भक्तोंका समागम संसारसे भयभीत मनुष्यको क्या अच्छा न लगेगा ? ॥ ३७ ॥ हे भगवन्, हम लोग तो आपके साक्षात् प्रियमित्र शङ्करके एक क्षणके सङ्गसे अत्यन्त दुश्चिकित्स जन्म तथा मृत्युके सद्वैद्य आपकी आज शरणमें प्राप्त हो चुके हैं ॥ ३८ ॥

स्य मर्त्यानां किमुताशिषः ॥३४॥ यत्रेड्यन्ते कथामृष्टास्तृष्णायाः प्रशमो यतः ॥ निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥३५॥ यत्र नारायणः साक्षाद्भगवान्न्यासिनां गतिः ॥ संस्तूयते सत्कथासु मुक्तसङ्गैः पुनः-पुनः ॥३६॥ तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ॥ भीतस्य किं न रोचेत तावकानां समागमः ॥३७॥ वयं तु साक्षाद्भगवन्भवस्य प्रियस्य सख्युः क्षणसङ्गमेन । सुदुश्चिकित्स्यस्य भवस्य मृत्योर्भिषक्तमं त्वाऽद्य गतिं गताः स्म ॥३८॥ यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च वृद्धाश्च सदानुवृत्त्या ॥ आर्या नताः सुहृदो भ्रातरश्च सर्वाणि भूतान्यनसूययैव ३९॥ यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु ॥ सर्वं तदेतत्पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ॥४०॥ मनुः स्वयंभूर्भगवान्भवश्च येऽन्ये तपोज्ञानविशुद्धसत्त्वाः ॥ अदृष्टपारा अपि यन्महिम्नः स्तुवन्त्यथो त्वात्मसमं गृणीमः ॥ ४० ॥ नमः समाय शुद्धाय पुरुषाय पराय च ॥ वासुदेवाय सत्त्वाय तुभ्यं भगवते नमः ॥ ४२ ॥ मैत्रेय उवाच ॥ इति प्रचेतोभिरभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः ॥ अनिच्छतां यानमतृप्तचक्षुषां ययौ स्वधामानपवर्गवीर्यः ॥ ४३ ॥ अथ निर्याय सलिलात्प्रचेतस उदन्वतः ॥ वीक्ष्याकुप्यन्द्रुमैश्छन्नां गां गां रोद्धुमिवोच्छ्रितैः ॥ ४४ ॥ ततोऽग्निमारुतौ राजन्-

जो कुछ हम लोगोंसे पढ़ा गया हो, हमारे अनुकूल आचरणसे गुरु, ब्राह्मण तथा वृद्ध प्रसन्न किए गए हों । श्रेष्ठ पुरुषोंको हम लोगोंने प्रणाम किया हो । सुहृद, भाई तथा समस्त प्राणियोंको हमलोगोंने दृष्टिसे न देखा हो ॥ ३९ ॥ हे ईश, अन्नसे रहित हमलोगोंने बहुत काल तक जो जलमें तपस्या की हो वह सब व्यापक पुरुष आपकी प्रसन्नताके लिए हो । यही हम आपसे माँगते हैं ॥ ४० ॥ मनु, ब्रह्मा, भगवान् शङ्कर तथा और भी जो ज्ञानसे विशुद्ध अन्तःकरणवाले हैं, वे जिन आपकी महिमाके पारको न देखकर अपनी बुद्धिके अनुरूप जैसे स्तुति करते हैं वैसे हम लोग भी स्तुति करते हैं ॥ ४१ ॥ सम, शुद्ध, परम पुरुष तथा छः ऐश्वर्यों से युक्त आप सत्त्वमूर्ति भगवान् वासुदेवको नमस्कार है ॥४२॥ मैत्रेयजीने कहा—इसप्रकार प्रचेताओंसे स्तुत हुए शरणागतपर प्रेम करनेवाले भगवान् हरिने प्रसन्न होकर "वैसाही होगा" ऐसा वर दे दिया । तथा अकुण्ठित प्रभाव भगवान् अतृप्त नेत्रोंवाले उन प्रचेताओं की जानेकी इच्छा न रहने पर भी अपने स्थानको चले गये ॥ ४३ ॥ तदनन्तर प्रचेता समुद्रके जलसे निकले और स्वर्गको रोकने के लिए मानों बढ़े हों ऐसे वृक्षों से व्याप्त पृथ्वीको

क्लेशोंको नेवाले, वेदविहित उदारगुण नामवाले, मन तथा वाणीसे भी अधिक वेगवाले, समस्त इन्द्रियोंसे अविज्ञात मार्गवाले आपको बार-बार नमस्कार है ॥ २२ ॥ आपने स्वरूपमें स्थित रहनेसे शुद्ध अतएव शान्त, मनके निमित्त रहते व्यर्थमें प्रकाशित होनेवाले द्वैतसे युक्त, जगत्की स्थिति, लय तथा उत्पत्तिके लिए मायाके गुणोंसे पृथक् पृथक् मूर्तियोंको धारण करनेवाले आपको नमस्कार है ॥ २३ ॥ संसारका हरण करनेवाली जिनकी बुद्धि है ऐसे तथा विशुद्ध सत्त्वस्वरूप श्रीहरिको नमस्कार है। एवं समस्त यदुवंशियोंके प्रभु वासुदेव कृष्ण भगवान्को नमस्कार है ॥ २४ ॥ हे कमलेक्षण, हे कमलके समान पाँव तथा कमलोंकी मालाको धारण करनेवाले कमलनाभ, आपको बार-बार नमस्कार है ॥ २५ ॥ कमलके परागके समान पीले उज्वल वस्त्र धारण करनेवाले, समस्त प्राणियोंके निवासस्थानरूप सबके साक्षी आपको हम नमस्कार करते हैं ॥२६॥ आपने समस्त क्लेशोंका नाश करनेवाला यह रूप हम

वेगपुरोजवाय सर्वाक्षमार्गैरगताध्वने नमः ॥२२॥ शुद्धाय शान्ताय नमः स्वनिष्ठया मनस्यपार्थं विलसद्द्वयाय ॥ नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ॥२३॥ नमो विशुद्धसत्वायहरये हरिमेधसे ॥ वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ॥२४॥ नमः कमलनाभाय नमः कमलमालिने ॥ नमः कमलपादाय नमस्ते कमलेक्षण ॥२५॥ नमः कमलकिञ्जल्कपिशङ्गामलवाससे ॥ सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे ॥२६॥ रूपं भगवता त्वेतदशेषक्लेशसंक्षयम् ॥ अविष्कृतं न. क्लिष्टानां किमन्यदनुकम्पितम् ॥२७॥ एतावत्वं हि विभुभिर्भाव्यं दीनेषु वत्सलैः ॥ यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धन ॥२८॥ येनोपशान्तिर्भूतानां क्षुल्लकानामपीहताम् ॥ अन्तर्हितोऽन्तर्हृदये कस्मान्नो वेद नाशिषः ॥२९॥ असावेव वरोऽस्माकमीप्सितो जगतःपते ॥ प्रसन्नो भगवान्येषामपवर्गगुरुर्गतिः ॥३०॥ वरं वृणीमहेऽथापि नाथ त्वत्परतः परात् ॥ नह्यन्तस्त्वद्विभूतीनां सोऽनन्त इति गीयसे ॥३१॥ पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यन्न सेवते ॥ त्वदङ्घ्रिमूलमासाद्य साक्षाद्य साक्षात्किं किं वृणीमहि ॥३२॥ यावत्ते मायया स्पृष्टा भ्रमाम इह कर्मभिः ॥ तावद्भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे ॥३३॥ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ॥ भगवत्सङ्गिसङ्ग

लोगोंके सामने प्रकट कर दिया है। इससे बढ़कर और हम लोगोंके ऊपर आपकी कौन-सी अनुकम्पा होगी ॥ २७ ॥ हे अमङ्गलनाशन, दीनों पर दया करनेवाले प्रभुओंको इतना ही करना चाहिए कि समय-समय पर 'यह हमारा है' इस बुद्धिसे स्मरण किया करें ॥ २८ ॥ जिस स्मरणसे प्राणियोंको सुख मिलता है। जब छोटे-छोटे प्राणियोंके भी हृदयमें आप अन्तर्यामी रूपसे स्थित रहते हो तब भला आपकी उपासना करनेवाले हम भक्तोंके सुखको आप क्यों नहीं जान सकते ॥ २९ ॥ हे जगत्पते, आप हम लोगोंके ऊपर प्रसन्न हो गये, बस यही हम लोगोंका इच्छित वर था, क्योंकि आपतो मोक्षके मार्गको दिखानेवाले स्वयं पुरुषार्थस्वरूप हैं ॥ ३० ॥ हे नाथ, तो भी कारणसे भी परे आपसे हमलोग एक वरदान माँगते हैं। चूँकि आपकी विभूतियोंका अन्त नहीं है, इसीसे आप अनन्त कहे जाते हैं ॥ ३१ ॥ जैसे सुखसे पारिजातके प्राप्त हो जानेपर भौंरा सुलभ भी दूसरे वृक्षकी सेवा नहीं करता, वैसे ही साक्षात् आपके चरणकमलोंको प्राप्त करके हम लोग क्या-क्या वर माँगे ॥ ३२ ॥ जब तक आपकी मायासे व्याप्त होकर अपने कर्मों से इस संसारमें भटकते रहें तब तक प्रत्येक जन्ममें

उसकी समस्त कामनाएँ मैं पूर्ण करूँगा तथा सुन्दर बुद्धि दूँगा ॥ १० ॥ जो तुम लोगोंने पिताकी आज्ञा प्रसन्नतापूर्वक स्वीकार की है, इससे तुम्हारी उत्तमकीर्ति लोकोंमें होगी ॥ ११ ॥ तथा ब्रह्माके गुणोंसे परिपूर्ण संसारमें विख्यात तुम्हारा एक पुत्र होगा, जो अपनी सन्तानसे तीनों लोकोंको पूर्ण कर देगा ॥ १२ ॥ हे राजपुत्रो, प्रम्लोचा नामकी अप्सराने कण्डु ऋषिके सङ्गसे एक कमलके समान नेत्रोंवाली कन्या प्राप्त की। उससे त्यक्त हुई उस कन्याको वृक्षोंने ग्रहण कर लिया ॥ १३ ॥ उस समय भूखसे क्षीण अतएव रोती हुई उस कन्याके मुखमें दयासे युक्त होकर चन्द्रमाने अपनी अमृत वर्षानेवाली तर्जनी अंगुली दे दी ॥ १४ ॥ ( आज तो वह युवती हो चुकी है, इसलिए ) मेरा अनुसरण करनेवाले अपने पितासे आदिष्ट हुए तुम लोग प्रजा उत्पादनके निमित्त शीघ्रही उस कन्याके साथ जाकर विवाह कर लो ॥ १५ ॥ एक धर्मका आचरण करनेवाले तुम सबकी एक धर्ममें स्वभाववाली यह पत्नी होगी। उसने

**अथो व उशती कीर्तिर्लोकाननुभविष्यति ॥ ११ ॥ भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः ॥ य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति ॥ १२ ॥ कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना ॥ तां चापविद्धां जगृहुर्भूरुहा नृपनन्दनाः ॥ १३ ॥ क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् ॥ देशिनीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥ प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्तता ॥ तत्र कन्यां वरारोहां तामुद्वहत माचिरम् ॥ १५ ॥ अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा ॥ अपृथग्धर्मशीलेयं भूयात्पत्न्यर्पिताशया ॥ १६ ॥ दिव्यवर्षसहस्राणां सहस्रमहतौजसः ॥ भौमान्भो-दयथ भोगान्वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥ अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः ॥ उपयास्यथ मद्धाम निर्विद्य निरयादतः ॥ १८ ॥ गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् ॥ मद्वार्तायातयामानां न बन्धाय गृहा मताः ॥ १९ ॥ नव्यवद्धृदये यज्ज्ञो ब्रह्मैतद्ब्रह्मवादिभिः ॥ न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥ २० ॥ मैत्रेय उवाच ॥ एवं ब्रुवाणं पुरुषार्थभाजनं जनार्दनं प्राञ्जलयः प्रचेतसः ॥ तद्दर्शनध्वस्ततमोरजोमला गिराऽगृणन्गद्गदया सुहृत्तमम् ॥ २१ ॥ प्रचेतस ऊचुः ॥ नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय ॥ मनोवचो-**

अपना चित्त तुम्हीं लोगोंमें अर्पित कर दिया है ॥ १६ ॥ देवताओंके लाखों वर्षों तक शक्तिसे युक्त रहते हुए पृथ्वीके भोग भोगोगे तथा मेरी कृपासे स्वर्गके भी भोग भोगोगे ॥ १७ ॥ तदनन्तर तुममें निरन्तर भक्तिसे अपने हृदयमें स्थित कामादि मलोंको दूर करके इन नरक तुल्य दोनों लोकोंके भोगोंसे विरक्त होकर मेरे स्थानको प्राप्त करोगे ॥ १८ ॥ जो मनुष्य घर में रहकर भी कर्म करते हैं और उन कर्मोंके शुभफल अर्पित करते हैं तथा मेरी ही वार्तासे अपना समय गवाँते हैं, उन्हें घर बन्धनमें नहीं डालता ॥ १९ ॥ जिस कथाके श्रवणसे सर्वज्ञ होता हुआ भी मैं ब्रह्मवादियों द्वारा कही गई कथा सुननेवाले श्रोताओंके हृदयमें नूतनके समान प्रविष्ट होता हूँ। तात्पर्य यह है कि इससे उन्हें ब्रह्मका साक्षात्कार होता है, क्योंकिजो मैं हूँ वही ब्रह्म है, जिसको प्राप्त करके मनुष्य न मोहको प्राप्त होते हैं, न शोक करते हैं और न प्रसन्न ही होते हैं ॥ २० ॥ मैत्रेयजीने कहा—इसप्रकार कह रहे, पुरुषार्थ प्राप्त करानेवाले सुहृत्तम भगवान्‌की उनके दर्शनसे नष्ट हो गया है रजोगुण-तमोगुणरूपी मल जिनका ऐसे प्रचेता हाथ जोड़कर—गद्गद वाणीसे स्तुति करने लगे ॥ २१ ॥ प्रचेताओंने कहा—समस्त

## ❋ अथ त्रिंशततमोऽध्यायः ❋

( प्रसन्न हुए भगवान्‌से वर लेकर आये हुए प्रचेताओंका वृक्षोंकी कन्याओंके साथ विवाह तथा राज्य करना )

विदुरजीने कहा—हे ब्रह्मन्, जो आपने प्राचीनबर्हिके पुत्र कहे हैं, वे रुद्रगीतसे भगवान्‌को प्रसन्न करके किस सिद्धिको प्राप्त हुए ॥ १ ॥ हे मैत्रेयजी, प्रचेताओंने भाग्यवश से
शङ्करको प्राप्त करके तथा उन्हीं कैवल्यनाथ प्रिय शङ्करके पार्श्ववर्ती होकर मोक्ष तो निश्चय ही प्राप्त किया होगा। परन्तु उसके पहले यहाँ अथवा परलोकमें उन्होंने क्या प्राप्त किया ॥ २ ॥
मैत्रेयजीने कहा—पिताकी आज्ञा पालन करनेवाले प्रचेताओंने समुद्रके अन्दर जपयज्ञरूपी तपस्यासे भगवान् श्रीहरिको प्रसन्न किया ॥ ३ ॥ तब सनातन भगवान् दस हजार वर्षोंके अन्तमें

विदुर उवाच ॥ ये त्वयाभिहिता ब्रह्मन्सुताः प्राचीनबर्हिषः ॥ ते रुद्रगीतेन हरिं सिद्धिमापुः प्रतोष्य काम् ॥१॥ किं बार्हस्पत्येह परत्र वाथ
कैवल्यनाथ प्रियपार्श्ववर्तिनः ॥ आसाद्य देवं गिरिशं यदृच्छयाप्रापुः परं नूनमथ प्रचेतसः ॥२॥ मैत्रेय उवाच ॥ प्रचेतसोऽन्तरुदधौ पितुरादेश-
कारिणः ॥ जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥ ३ ॥ दशवर्षसहस्रान्ते पुरुषस्तु सनातनः ॥ तेषामाविरभूत्कृच्छ्रं शान्तेन शमयन् रुचा ॥४॥
सुपर्णस्कन्धमारूढो मेरुशृङ्गमिवाम्बुदः ॥ पीतवासा मणिग्रीवः कुर्वन्वितिमिरा दिशः ॥५॥ काशिष्णुना कनकवर्णविभूषणेन भ्राजत्कपोलवदनो
विलसत्किरीटः ॥ अष्टायुधैरनुचरैर्मुनिभिः सुरेन्द्रैरासेवितो गरुडकिन्नरगीतकीर्तिः ॥६॥ पीनायताष्टभुजमण्डलमध्यलक्ष्म्या स्पर्धच्छ्रिया परिवृतो
वनमालयाद्यः ॥ बर्हिष्मतः पुरुष आह सुतान्प्रपन्नान्पर्जन्यनादरुतया सघृणावलोकः ॥७॥ श्रीभगवानुवाच॥ वरं वृणीध्वं भद्रं वो यूयं मे नृपन-
न्दनाः। सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः ॥८॥ योऽनुस्मरति सन्ध्यायां युष्माननुदिनं नरः ॥ तस्य भ्रातृष्वात्मसाम्यं तथा भूतेषु सौहृदम्
॥९॥ ते तु मां रुद्रगीतेन सायं प्रातः समाहिताः ॥ स्तुवन्त्यहं कामवरान्दास्ये प्रज्ञां च शोभनाम् ॥१०॥ यद्यूयं पितुरादेशमग्रहीष्ट मुदान्विताः ॥

उनके तपसे होनेवाले कष्टको अपनी कान्तिसे शान्त करते हुए शान्त शरीरसे प्रकट हुए ॥ ४ ॥ वे गरुड़के कन्धेपर बैठे हुए थे, पीले वस्त्र और गलेमें मणिको धारण किये हुए थे तथा
अपनी कान्तिसे दिशाओंके अन्धकारको नष्ट कर रहे थे ॥ ५ ॥ नाना वर्णों से विचित्र प्रकाश करनेवाले कुण्डलादिभूषणोंसे उनके कपोल तथा मुखकी शोभा हो रही थी, शिरपर मुकुट
शोभित हो रहा था, आठों भुजाओंमें आठ आयुध लिये हुए थे और सेवक, मुनि तथा देवता सेवा कर रहे थे। एवं गरुड़रूपी किन्नर उनकी कीर्तिका गान कर रहा था ॥ ६ ॥ लम्बे तथा
स्थूल आठ भुजाओंके मध्यमें रहनेवाली लक्ष्मीकी शोभासे स्पर्धा करनेवाली वनमालाको पहने हुए थे। वे भगवान् दयादृष्टिसे देखते हुए गम्भीर स्वरसे भक्त प्रचेताओंसे कहने लगे ॥७॥
भगवान्‌ने कहा—हे राजपुत्रो, तुम हमसे वरदान माँगो, तुम्हारा कल्याण हो। प्रेमपूर्वक एक साथ रहनेवाले तुम लोगोंके सौहार्दसे मैं प्रसन्न हूँ ॥८॥ जो मनुष्य प्रतिदिन सन्ध्याके समय
तुम्हारा स्मरण करेगा। उसका भाइयोंमें अपनी आत्माके समान प्रेम तथा प्राणियोंमें मित्रता होगी ॥ ९ ॥ जो मनुष्य सावधान होकर प्रातः तथा सायंकाल मेरी रुद्रगीतसे स्तुति करेगा,

प्राचीनबर्हिको जीव तथा ईश्वरकी गति बतलाकर और उससे सलाहकर वहाँसे सिद्धलोकको चले गये ॥ ८० ॥ वह राजर्षि प्राचीनबर्हि भी प्रजाकी रक्षाका पुत्रोंको आदेश देकर तपस्या करनेके लिए कपिलाश्रमको निकल गया ॥ ८१ ॥ वहाँ पर वह वीर समस्त आसक्ति छोड़कर निश्चल मनसे भगवान् के चरणकमलोंका भजन करने लगा। तदनन्तर अनन्य भक्तिसे भगवानका भजन कर रहा वह अन्तमें उनको प्राप्त हो गया ॥ ८२ ॥ हे अनघ, यह अध्यात्मज्ञान कथारूपसे नारदमुनिने कहा है। इसे जो सुनाता है तथा सुनता है वह लिङ्गशरीर

सिद्धलोकं ततोऽगमत् ॥ ८० ॥ प्राचीनबर्ही राजर्षिः प्रजासर्गाभिरक्षणे ॥ आदिश्य पुत्रानगमत्तपसे कपिलाश्रमम् ॥ ८१ ॥ तत्रैकाग्रमना धीरो गोविन्दचरणाम्बुजम् ॥ विमुक्तसङ्गोऽनुभजन्भक्त्या तत्साम्यतामगात् ॥८२॥ एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ ॥ यः श्रावयेद्यः शृणुयात्स लिङ्गेन विमुच्यते ॥ ८३। एतन्मुकुन्दयशसा भुवनं पुनानं देवर्षिवर्यमुखनिःसृतमात्मशौचम् ॥ यः कीर्त्यमानमधिगच्छति पारमेष्ठ्यं नास्मिन्भवे भ्रमति मुक्तसमस्तबन्धः ॥ ८४ ॥ अध्यात्मपारोक्ष्यमिदं मयाऽधिगतमद्भुतम् ॥ एवं स्त्रियाश्रमः पुंसश्छिन्नोऽमुत्र संशयः ॥ ८५ ॥ इति श्रीमद्भा० म० च० विदुरमैत्रेयसम्वादे प्राचीनबर्हिर्नारदसंवादो नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥

छोड़कर मोक्ष प्राप्त करता है ॥ ८३ ॥ भगवान्की महिमासे तीनों लोकोंको पवित्र करनेवाले देवर्षियोंमे श्रेष्ठ नारदजीके मुखसे निकले हुए, मनको शुद्ध करनेवाले, तथा उत्कृष्ट फल देनेवाले इस चरित्रको जो सुनता है वह समस्त बन्धनोंसे मुक्त हो जाता है तथा इस संसारमें नहीं भटकता फिरता ॥ ८४ ॥ मैंने कथाके व्याजसे यह अद्भुत अध्यात्मज्ञान प्राप्त किया है जिससे मनुष्यका बुद्धिके सहित अहङ्कार नष्ट हो जाता है और संशय भी दूर हो जाते हैं ॥ ८५ ॥

उन्तीसवें अध्यायका सार—श्रीनारदजीने कहा—हे प्राचीबर्हि, पुत्रादिमें दृढ़ आशक्ति रखने से ही प्राणियोंको संसार बन्धन प्राप्त होता है और आसक्ति छोड़ देने से मुक्ति मिलती है। इसलिये हे राजन्, सुन्दर विकसित पुत्र आदि रूप फूलोंसे व्याप्त स्त्री आदिसे भरे हुए गृहरूपी उद्यानमें भोगोंकी लिप्सासे भ्रमण कर रहे तथा क्षण, घड़ी, पहर आदि कालके अवयवरूपी वृकोंसे पीछा किये जा रहे विहार रसिक जीवरूपी मृग को कृतान्तरूपी व्याध मारनेके लिए पीछे-पीछे दौड़े आ रहा है। इसलिए उसकी खोज करो, बादमें सिद्धि प्राप्त करोगे। श्रीमैत्रेयजीने कहा—हे विदुरजी, यों नारदजीने प्राचीनबर्हिको आदेश देकर स्वयं सिद्धलोकको चले गये तथा वह राजा भी पृथिवीका परिपालन भार अपने पुत्रोंको सौंपकर मुनिके आश्रम में चला गया। उन्तीसवाँ अध्याय समाप्त ॥

---

समस्त विषय मनमें उसके अपराधसे भोग्य रूपसे आते हैं और भोगके पश्चात् चले जाते हैं, क्योंकि समस्त प्राणी मनके साथ रहते हैं ॥ ६८ ॥ सत्त्वगुण प्रधान भगवान्‌के ध्यानमें तत्पर उस मनसे यह संसार बिलकुल एकमें मिलाजुला-सा अवभासित होता है, जैसे कि चन्द्रमामें मिलकर राहु ॥ ६९ ॥ पुरुषमें जबतक बुद्धि, मन, इन्द्रिय, विषय तथा गुणोंका समूह अनादि होकर रहता है, तबतक उसमें 'अहं, मम' यह भाव यानी स्थूल देहका सम्बन्ध विच्छिन्न नहीं होता ॥ ७० ॥ सुप्ति, मूर्च्छा और बन्धुओंके वियोगके दुःखमें तथा मृत्यु और ज्वर में भी इन्द्रियोंका निधान होनेसे मनुष्यका अहङ्कार प्रकाशित नहीं होता ॥ ७१ ॥ युवा मनुष्यकी ग्यारह इन्द्रियोंका जो अहङ्कार रहता है वह गर्भके बालकमें परिपूर्ण न होनेके कारण उस समय प्रकाशित नहीं होता, जैसे अमावस्याके दिन चन्द्रमाके रहते हुए भी उसका रूप नहीं दीखता ॥ ७२ ॥ पदार्थके न रहने परभी विषयोंका ध्यान करनेवाले इस जीवका संसार

वर्गशो यान्ति सर्वे समनसो जनाः ॥६८॥ सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि ॥ तमश्चन्द्रमसीवेदमुपरज्यावभासते ॥ ६९ ॥ नाहं ममेति भावोऽयं पुरुषे व्यवधीयते यावद्बुद्धिमनोक्षार्थगुणव्यूहो ह्यनादिमान् ॥ ७० ॥ सुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः ॥ नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ॥ ७१ ॥ गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा ॥ लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथा ॥७२॥ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते ॥ ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा॥७३॥एवं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तृतम् ॥ एष चेतनया युक्तो जीव इत्यभिधीयते ।७४॥ अनेन पुरुषो देहानुपादत्ते विमुञ्चति ॥ हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥७५॥ यथा तृणजलूकेयं नापयात्यपयाति च ॥ न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः॥७६॥ यावदन्यं न विन्देत व्यवधानेन कर्मणाम् ॥ मन एव मनुष्येन्द्र भूतानां भवभावनम् ॥७७॥ यदाक्षैश्चरितान्ध्यायन्कर्माण्याचिनुतेऽसकृत् ॥ सति कर्मण्यविद्यायां बन्धः कर्मण्यनात्मनः ॥७८॥ अतस्तदपवादार्थं भज सर्वात्मना हरिम् । पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥७९॥ मैत्रेय उवाच ॥ भागवतमुख्यो भगवान्नारदो हंसयोर्गतिम् ॥ प्रदर्श्य ह्यमुमामन्त्र्य

निवृत्त नहीं होता, जैसे कि स्वप्नमें देखा गया अनर्थ बिना जागे निवृत्त नहीं होता ॥ ॥ ७३ ॥ यो यह लिङ्गशरीर पाँच तन्मात्रा, तीन गुण, सोलह विकारोंसे विस्तृत है तथा जीव नामक चिति शक्तिसे युक्त यह जीव कहा जाता है ॥ ७४ ॥ पुरुष इसीसे शरीरको ग्रहण करता और छोड़ता है तथा हर्ष, शोक, भय सुख और दुःख इसीसे प्राप्त करता है ॥ ७५ ॥ जैसे यह तृणजलूका पहलेक तृणको छोड़कर नहीं जाती और दूसरे तृणको ग्रहण करने पर चली जाती है, वैसे ही मरनेवाला भी मनुष्य पहले शरीरकी स्मृतिको नहीं छोड़ता ॥ ७६ ॥ जबतक मनुष्यके पूर्व देहक कर्मोंका नाश नहीं होता, तबतक वह दूसरा शरीर प्राप्त नहीं करता । हे राजन्, मनुष्योंका मन ही संसारका कारण है ॥ ७७ ॥ जब इन्द्रियोंसे उपभुक्त विषयों का ध्यान करता हुआ एकबार भी कर्मोंका चयन करता है, तब उस कर्मके रहनेपर उसको अज्ञानसे देह आदिका बन्धन होता है ॥ ७८ ॥ अतः उसे रोकने के लिए भगवद्रूप समस्त संसारको देखते हुए सर्वभावसे उन हरिका भजन करो, जिनसे इस संसारका जन्म, पालन तथा संहार होता है ॥ ७९ ॥ मैत्रेयजीने कहा—हे विदुरजी, भगवान्‌के भक्तोंमें मुख्य नारदजी

जो मेरा आत्मतत्त्वके विषयमें महान् संशय था, वह आपने दूर कर दिया। परन्तु एक यहाँ दूसरा संशय है, जिसमें इन्द्रियोंकी वृत्तियाँ तथा ऋषि लोग भी मोहको प्राप्त होते हैं ॥ ५७ ॥ मनुष्य जिस शरीरमें कर्म करता है उसे यहींपर छोड़कर दूसरे लोकमें कर्मोपस्थापित दूसरे शरीर से उपयुक्त हुए कर्मोंको प्राप्त करता है ॥ ५८ ॥ यह ज्ञानियोंका स्थान-स्थानपर विवाद होता है। और भी एक दूसरा सन्देह यह है कि—वेदोक्तकर्म किया जाता है वह एकक्षणके पश्चात् ही परोक्ष होनेके कारण प्रकाशित नहीं होता ॥ ५९ ॥ नारदजीने कहा—मनुष्य जिस शरीरसे कर्म करता है, परलोकमें मनके सहित उसी लिङ्ग शरीरसे उसका बिना किसी व्यवधानके स्वयं उपभोग करता है ॥ ६० ॥ जैसे सो रहे इस जाग्रत शरीरको जीवनमुक्त छोड़ कर आत्मामें ( मनमें ) संस्काररूपसे स्थित कर्मोंका शयन कर रहे देह सदृश कर्मोपस्थापित शरीरसे अथवा पश्चादिशरीरसे पुरुष भोग करता है, वैसे ही लोकान्तरमें भी भोग करता है

कर्माण्यारभते येन पुमानिह विहाय तम् ॥ अमुत्रान्येन देहेन जुष्टानि स यदश्नुते ॥ ५८ ॥ इति वेदविदां वादः श्रूयते तत्र तत्र ह ॥ कर्म यत्क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ५९ ॥ नारद उवाच ॥ येनैवारभते कर्म तेनैवामुत्र तत्पुमान् ॥ भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वयम् ॥ ६० ॥ शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा॥ कर्मात्मन्याहितं भुङ्क्ते तादृशेनेतरेण वा ॥६१॥ ममैते मनसा यद्यदासावहमिति ब्रुवन् ॥ गृह्णीयात्तत्पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६२ ॥ यथानुमीयते चित्तमुभयैरिन्द्रियेहितैः ॥ एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥ ६३ ॥ नानुभूतं क्व चानेन देहेनादृष्टमश्रुतम् ॥ कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥६४॥ तेनास्य तादृशं राजन् लिङ्गिनो देहसंभवम् ॥ श्रद्धत्स्वाननुभूतोऽर्थो न मनःस्प्रष्टुमर्हति ॥ ६५ ॥ मन एव मनुष्यस्य पूर्वरूपाणि शंसति ॥ भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥६६॥ अदृष्टमश्रुतं चात्र क्वचिन्मनसि दृश्यते ॥ यथा तथानुमन्तव्यं देशकालक्रियाश्रयम् ॥६७॥ सर्वे क्रमानुरोधेन मनसीन्द्रियगोचराः ॥ आयान्ति

॥६१॥ मनुष्य 'यह मैं हूँ' ये मेरे पुत्र आदि हैं' इसप्रकार कहता हुआ मनसे जिन-जिन शरीरोंको ग्रहण करता है, उन-उन शरीरोंके द्वारा सिद्ध हुए कर्मोंको ग्रहण करता है। अहङ्कार गृहीत जिन कर्मोंसे मनुष्यका दूसरा जन्म होता है ॥ ६२ ॥ जैसे ज्ञान तथा कर्मेन्द्रियोंकी चेष्टाओंसे चित्तका अनुमान किया जाता है वैसे ही चित्तकी वृत्तियोंसे पूर्वजन्मके कर्मोंका अनुमान किया जाता है ॥ ६३ ॥ इस शरीरसे कहीं भी जो अनुभूत नहीं हुआ, कहीं भी देखा नहीं गया और न कहीं सुना ही गया, वह जिस तरहका रूप रहता है वह शायद कभी स्वप्नादिमें मनमें उपलब्ध होता है ॥ ६४ ॥ इसलिए हे राजन्, वासनाके आश्रय इस जीवका तत् तत् अनुभवादि से युक्त पूर्व देहकी उत्पत्ति निश्चितरूपसे मानो, क्योंकि जिसका कभी अनुभव नहीं किया गया, वह वस्तु मनमें स्फुरित नहीं हो सकती ॥ ६५ ॥ मनुष्यका मन ही पूर्वके रूपोंको कहता है, इसलिए हे राजन्, उन्नति अथवा अवनतिको प्राप्त करनेवाले तुम्हारा कल्याण हो ॥ ६६ ॥ वस्तु बिना देखी तथा सुनी गई भी वस्तु जैसे कभी स्वप्नमें दिखाई देती है वैसे ही उसे अनुकूल स्थान, समय तथा क्रियाके आश्रय समझना चाहिए ॥ ६७ ॥

चरणकमल ही प्राणियोंके आश्रय हैं, क्योंकि उन्हींसे मनुष्योंका इस संसारमें कल्याण होता ॥ ५० ॥ तथा जहाँ से थोड़ा भी भय न हो वही अत्यन्त प्रिय तथा आत्मा है ऐसा जो
मनुष्य जानता है, वही विद्वान है और वही गुरु तथा हरि है ॥ ५१ ॥ नारदजी ने कहा—हे पुरुषश्रेष्ठ, इस तरह मैंने आपके प्रश्नका समाधान दे दिया अब अत्यन्त गोपनीय बिलकुल
निश्चित रहस्य तुम्हें बतला हूँ । तुम मेरे वचनोंको सावधान होकर सुनो ॥ ५२ ॥ खिले हुए फूलोंकी सुन्दर वाटिकामें परस्पर स्त्रीसे मिलकर उसीमें आसक्त हुए, भौंरोंके गानमें लुब्ध
कर्णवाले, आगे हिंसा करनेवाले भेड़ियोंका अनादर करके पीछेसे व्याधके बाणसे विदीर्ण शरीर आते हुए मृगका अन्वेषण करो ॥ ५३ ॥ हे राजन् पुष्पके समान धर्मवाली स्त्रियोंके
आश्रयमे पुष्पमधुकी गन्धके तुल्य, अत्यन्त अल्प, काम्यकर्मोंके फलस्वरूप, जिह्वा तथा उपस्थ आदि इन्द्रियोंके तुच्छ सुखोंको खोजते हुए तथा स्त्रियोंके साथ एकान्तमें मिलकर उसीमें

**हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ तत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥ ५० ॥ स वै प्रियतमश्चात्मा यतो न भयमण्वपि ॥ इति
वेद स वै विद्वान्यो विद्वान्स गुरुर्हरिः ॥ ५१ ॥ नारद उवाच ॥ प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ ॥ अत्र मे वदतो गुह्यं निशामय
सुनिश्चितम् ॥ ५२ ॥ क्षुद्रंचरं सुमनसां शरणे मिथित्वा रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम् ॥ अग्रे वृकानसुतृपोऽविगणय्य यान्तं पृष्ठे मृगं
मृगय लुब्धकबाणभिन्नम् ॥ ५३ ॥ सुमनः समधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्यकर्मविपाकजं कामसुखलवं जैह्व्यौ-
पस्थ्यादि विचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णमग्रे वृकयू-
थवदात्मन आयुर्हरतोऽहोरात्रान्तान्काललवविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तःशरेण यमिह
पराविध्यति तमिममात्मानमहो राजन्भिन्नहृदयं द्रष्टुमर्हसीति ॥ ५४ ॥ स त्वं विचक्ष्य मृगचेष्टितमात्मनोऽन्तश्चित्तं नियच्छ हृदि कर्णधुनीं च
चित्ते ॥ जह्यङ्गनाश्रममसत्तमयूथगाथं प्रीणीहि हंसशरणं विरम क्रमेण ॥ ५५ ॥ राजोवाच ॥ श्रुतमन्वीक्षितं ब्रह्मन्भगवान्यदभाषत ॥ नैतज्जा-
नन्त्युपाध्यायाः किं न ब्रूयुर्विदुर्यदि ॥५६॥ संशयोऽत्र तु मे विप्र सञ्छिन्नस्तत्कृतो महान् ॥ ऋषयोऽपि हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः ॥५७॥**

मनलगाये हुए, भौंरोंकी गतिके समान स्त्रियोंके अलापमें अत्यन्त प्रलोभित कर्णवाले, आगे भेड़ियोंके समूहकी तरह अपनी आयु हरण करनेवाले, दिन-रातरूपी कालका विचार न करके
घरमें विहार करनेवाले, तथा पीछेसे प्रवृत्त लुब्धकरूपी मृत्यु जिसे अन्तकरूप बाणसे बेधती है उस विदीर्णहृदय इस आत्माका तुम अवलोकन करने योग्य हो ॥ ५४ ॥ इसलिए तुम
मृगकी चेष्टाओंको विचारकर चित्तको अपने हृदयमें तथा कानोंकी धुनीको चित्तमें लीन कर दो तथा अत्यन्त कामी मनुष्योंकी जिसमें वार्ता होती है उस गृहस्थाश्रमको छोड़कर प्राणियों
की शरणभूत ईश्वरको प्रसन्न करो । इसप्रकार धीरे धीरे सब जगहसे विरक्त हो जाओ ॥ ५५ ॥ प्राचीनबर्हिने कहा—हे ब्रह्मन्, जो आपने कहा है वह मैंने सुना है तथा उसका विचार
भी किया है । परन्तु हमारे ये उपाध्याय लोग यानी कर्मोपदेष्टा आचार्यलोग यह नहीं जानते । यदि जानते होते, तो क्यों नहीं कहते ॥ ५६ ॥ हे विप्र, उन उपाध्यायोंसे किया गया

गतिसे वैराग्य तथा ज्ञानको उत्पन्न करना है ॥ ३७ ॥ हे राजन्, वह भक्तियोग भगवान्‌की कथा का आश्रयण करने में शीघ्र होता है तथा नित्यही श्रद्धापूर्वक सुनने और पढ़नेवालेको होता है ॥ ३८ ॥ हे राजन, जहाँपर भगवान्‌के गुण कहने-सुनने में व्यग्रचित्तवाले तथा शुद्ध अन्तःकरणवाले उनके भक्त साधुलोग रहते हैं ॥ ३६ ॥ उस स्थानमें महात्माओं द्वारा कहे गये भगवान्‌के चरित्ररूपी अमृतसे पूर्ण नदियाँ चारों तरफसे बहती हैं। हे राजन्, उन्हें जो मनुष्य अतृप्त होकर सावधान कानोंसे सुनते हैं, उन्हें भूख, प्यास, भय, शोक, तथा मोह स्पर्श नहीं करते ॥ ४० ॥ स्वभावसे ही उत्पन्न होनेवाले इन कामादिसे युक्त मनुष्य भगवान्‌की कथारूपी अमृत समुद्रमें प्रेम नहीं करता, इसमें तनिक भी सन्देह नहीं है ॥ ४१ ॥ प्रजापतियोंके पति ब्रह्मा, स्वयं भगवान शंकर, मनु दक्षादि प्रजापति, नैष्ठिक ब्रह्मचारी सनकादि, मरीचि, अत्रि, अङ्गिरा, पुलस्त्य, पुलह, क्रतु, भृगु, वसिष्ठ तथा मैं, ये जितने ब्रह्मवादी हैं वे सबके सब आज भी तपस्या, विद्या और समाधिसे खोजते हुए भी सबके साक्षी भगवान् को नहीं खोज पाते ॥ ४२-४४ ॥ अत्यन्त विस्तृत तथा दुष्पार वेदमें विचरते हुए मन्त्रोंसे व्यवच्छिन्न इन्द्रादिरूप-

राजन् साधवो विशदाशयाः ॥ भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ॥३६॥ तस्मिन्महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः परितः स्रवन्ति ॥ ता ये पिबन्त्यवितृषो नृप गाढकर्णैस्तान्न स्पृशन्त्यशनतृड्भयशोकमोहाः ॥४०॥ एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ॥ न करोति हरेर्नूनं कथामृतनिधौ रतिम् ॥ ४१ ॥ प्रजापतिपतिः साक्षाद्भगवान्गिरिशो मनुः ॥ दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४२ ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ॥ ४३ ॥ अद्यापि वाचस्पतयस्तपोविद्यासमाधिभिः ॥ पश्यन्तोऽपि न पश्यन्ति पश्यन्तं परमेश्वरम् ॥ ४४ ॥ शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे ॥ मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४५ ॥ यदा यमनुगृह्णाति भगवानात्मभावितः ॥ स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ ४६ ॥ तस्मात्कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु ॥ मार्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ॥ ४७ ॥ स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः । आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः ॥ ४८ ॥ आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम् ॥ स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम् ॥ तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ॥ ४६ ॥

को भजते हुए उन्होंने परब्रह्मको नहीं जाना ॥ ४५ ॥ मनमें स्थिर किये गये भगवान् जब जिसके ऊपर कृपा करते हैं तब वह लोकव्यवहार तथा वेदमें परिनिष्ठित बुद्धि छोड़ देता है ॥ ४६ ॥ इसलिये हे प्राचीनबर्हि, तुम अज्ञानसे सत्यकी तरह प्रतीत हो रहे इन कर्मों में परमार्थ बुद्धि मत करो, क्योंकि ये केवल कानको मनोहर लगनेवाले हैं। वस्तुतः इनसे ब्रह्मकी प्राप्ति नहीं होती ॥ ४७ ॥ जो मलिनबुद्धि वेदको कर्मपरक बतलाते हैं, वे उसके रहस्यको नहीं जानते तथा अपने स्वरूपको भी नहीं जानते, जहाँपर भगवान् रहते हैं ॥ ४८ ॥ पूर्वकी ओर अग्रभागवाले कुशाओंसे समस्त पृथ्वीको व्याप्त करके तथा बहुत पशुओंके वधसे यज्ञका अहङ्कारी, अतः दुर्विनीत बने हुए तुम कर्मको नहीं जानते। जिसमें भगवान् प्रसन्न हों वही कर्म है और उनमें जिससे मति हो वही विद्या है ॥ ४६ ॥ इस संसारमें देहधारियोंकी आत्मा तथा स्वामी भगवान् ही हैं, क्योंकि वही सबको उत्पन्न करनेवाले हैं। इसलिए भगवान्‌के

सुरसमरखिलैर्या वन्दिताऽमृतकुडैः समुदास्था । तां गृहाण निजभक्तनिवेद्यां दक्षिणां सुमनसामपि पूज्याम् ॥ नीराजना—कस्तूरिकुंकुमसुगन्धिसुगन्धितेन एलालवंगघनसारसमन्वितेन । सौवर्णपात्रघृतगोमयनर्धकेन नागान्तकार्भय ! करोमि तवतिथथीम् ॥ प्रदक्षिणा—समागतानां भवपाशनाशिनां भपादशानांत्रयतापहाहिणाम् । विधीयते यां त्रिदुषां गृहे सदा प्रदक्षिणां दक्षिण ! ते करोमि ताम् ॥ पुष्पाञ्जलिः-हे पाशभृत वरुणनाथ जलेश देव दीने दयां मयि विधेहि सदा सुदेव ! । नातः परं किमपि प्रार्थयितव्यमस्ति पुष्पाञ्जलिं ननु गृहाण सदा मदीयम् ॥ [नवग्रहार्चनम्] ध्यानम्—बृहस्पतिं दैत्यगुरुं महीसुतं शनैश्चरं चन्द्रसुतं च राहुम् । दिवाकरं चन्द्रमसं सुकेतुं स्वकीयचित्ते बहुचिन्तयामि ॥ आवाहनम्—समस्तप्रत्यूहसमुच्चयस्य विनाशने प्राप्तगुणाः सुभव्याः । आवाहनं वो वितनोमि देवाः भवन्तु कल्याणवरा भवन्तः ॥ आगनम्-रोचिष्णु काञ्चनचयांशुपिशङ्गिताशं वैदूर्यरत्ननिकरैरभिभासितं तम् । पीठं सदा सदमरैः प्रियमादृतं स साङ्गा नवग्रहवराः सततं भजन्तु ॥ पाद्यम्—कस्तूरिका सुरभिचन्दनमोदयुक्तमेलालवङ्गघनसारसुवासितं च । पाद्यं ददामि जगदेकनिवासदेवाः साङ्गा नवग्रहवराः ! प्रतिमानयन्तु ॥ अर्घ्यम्—सौजन्यमांगल्यजननीजननीजनानां रूपां कृपेव वसुधारिणी वै । ते सवदेव गुरुगौरवधारिदेहा अर्घ्यं सदैव हि ग्रहा मम धारयन्तु ॥ आचमनीयम्—कंकोलपत्रहरिचन्दनपुष्पयुक्तं एलालवङ्गजवलीधनसारसारम् । दत्तं सदैव हृदयेऽस्मिन् देवा ! भजन्तु शुभमाचमनीयमम्मः ॥ मधुपर्कः—अधिकमानधुनः प्रियकारकः स मधुपर्क इतः स समुस्थितः । सुविहितस्य तरयस्य सुराग्रयाः कुरुत स्वीकृतं नव संख्यकाः ! ॥ स्नानम्—जले समादाय विचित्र पुष्पाण्यग्रयाणि चानीय निपातितानि । स्नानं विधेयं विबुधाः ! समन्तात्समेत्य युष्माभिरिहाद्भुणे मे ॥ रक्तचूर्णम्—धूपादिकनानि सुवासितं तथा शोणश्रियानन्दविवर्धितेन च । श्रीरक्तचूर्णमलतापहारकं नवग्रहा वो मनसार्पयामि ॥ धूपः—लवङ्गपाटीरजचूर्णवर्तितं नरासुराणामपि सौख्यदायकम् । लोकत्रय गन्धचयप्रसारकं गृह्णन्तु धूपं गुरुकं नवग्रहाः ! ॥ दीपः—सद्वर्तिकां ज्ञानविवर्धिकामिमां निपात्य दीपे विनिवेदितां तथा । प्रज्वालितं ध्वान्तविनाशकारकं गृह्णन्तु ज्ञानस्य विशालरूपकम् ॥ नैवेद्यम्—सिद्धान्नकर्पूरविराजितं पुरः सौरभ्यसान्द्रेण विवर्धितं तथा । नैवेद्यमेतद्रुचिरं सुगन्धितं स्वीकृत्य मामत्र कृतार्थयन्तु वै ॥ ताम्बूलम्—दिव्या ग्रहा ! नव समेत्य गृह मदीयं भक्त्यार्पितं परमगन्धयुतं सुरम्यम् । एलालवङ्गबहुलं क्रमुकादियुक्तं ताम्बूलमद्य मम गृह्णत हे सुरेन्द्राः ! ॥ दक्षिणा—देवासुरैर्नित्यमशेषकाले प्रणीयमाना प्रभवः ! पुराणाः ! । गृह्णन्तु सद्यः खलु दक्षिणां च ध्यानेन भक्ते मयि वर्तितव्यम् ॥ नीराजना—नीराजना सौख्यप्रदा सदैव गाढान्धकारादपि दूरकर्त्री । अशेषपापैः परिपूरितस्य शुद्धिं करोति प्रियमानवस्य ॥ प्रदक्षिणा—प्रदक्षिणाः सन्ति प्रदक्षिणास्तथा पदे पदे दुःखविनाशिकाः अपि । जन्मान्तरस्यापि विनाशकारिकाः पापस्य याश्चित्तविवर्धितस्य च ॥ पुष्पाञ्जलिः—पुष्पाञ्जलिं सकलदिव्यग्रहा ! मदीयं भक्त्यार्पितं मधुरगन्धयुतं ससारम् । दाने विधाय करुणां मयि हे सुरेन्द्राः ! स्वीकृत्य दीनजनवत्सलतां किरन्तु ॥ स्तवनम्—भानुः शशीधरणिजः सबुधो गुरुश्च शुक्रस्तथा देवमनायकसूनुरेषः । राहुः सदैव जगतां सुहृदः सकेतुरेते गृहाः शिवकरा सततं भवन्तु ॥[रुद्रस्य] ध्यानम्—वृष-वाहन ! सर्प-भूषण ! डमरू-वादक ! शूल-धारक ! । सततं हृदि चिन्तयामि त्वामयि गङ्गाधर ! चन्द्रशेखर ! ॥ आवाहनम्—क्रियते करुणा-निधे ! विभो ! गिरिशाऽवाहनमद्य ते मया । भगवन्निज-पादुपङ्कजैः कुरु पूतं मम सद्मपावनैः ॥ आसनम्—अयि रुद्र ! सुसज्जित मया तव हेतोरिदमद्य चासनम् । करुणेश ! गृहाण वर्धय निज-दासस्य यशो-वितानकम् ॥ पाद्यम्—अयि पाद्यमिहं प्रदीयते बहुप्रीतेन मया दयानिधे ! ॥ करुणां कुरु गृह्यतामिदं शिव ! दूरीकुरु आभकं भयम् ॥ अर्घ्यम्—करुणा यदि नाथ त मयि यदि श्रद्धार्पितमेव गृह्यते । पुनरीश ! विलम्ब्यते कथं कथमर्घ्यं न्त ममाद्य गृह्यते ॥ आचमनीयम्—गिरिशोपस्थापितं ते पुरो निज-भक्त्या पात्रपूरितं मुदा । इदमाचमनीयमीश्वर ! करुणां दर्शय गृह्यतां प्रभो ! ॥ स्नानम्—मया ते प्रियं संभृतं गाङ्गमीश ! जलं पूतपूतं त्वदर्थं त्रिनेत्र ! । प्रसीद प्रभो ! हे जटा-

ऽस्मि जानामि न चार्घ्यदानं परं न चिन्ता मयि तेऽर्घ्यदाने। यतो हि त्वं दीन-जनानुकम्पी, गृहाणासि श्रद्धार्पितमेव देव ! ॥ आचमनीयम्-श्रीमन् ! गृहाणाऽऽचमनीयमेतत् मयार्पितं देव ! विसर्पि सन्धम्। तवोचितं नास्ति गणेश ! जाने तथापि श्रद्धा-रस पूरितं मे ॥ स्नानम्-देवेश ! लम्बोदर ! शुद्धमेतत् तीर्थोदकं यत्नतयाऽर्जितं मे। स्नानं कुरु त्वं [illegible] मदीयः करुणा-लवाप्तो ॥ मधुपर्कः-पुरःप्रभो ! ते मधुपर्क एषन शोभते तुच्छतया दयालो ! स्वीकृत्य देवेश ! तथापि दीने दयार्द्रतां दर्शय दीनबन्धो ! कुंकुमम् पाद-द्वये [illegible] चूर्णमेतत् परिस्फुरद्गन्ध-युते त्वदीये। समर्प्यते दीन-जनानुकम्पिन् ! प्रसीद देवेश ! गृहाण सर्वम् ॥ धूपः—निजास्य-निश्वास-सुगन्ध-बन्धुं दिव्यं सुरम्यं किल धूमजालम्। [illegible] मानसेन ममाऽर्पितं स्वीकुरु देवदेव ! ॥ दीपः—दयानिधे ! भास्कर-दीप दर्शनं पुरस्तवेयं किल दीप-मालिका। तथापि चाशा मम मानसे विभो ! निराशतां [illegible] करोत्यहो ! ॥ नैवेद्यम्-मन्वातिदिव्यं परिपाक-सिद्ध नैवेद्यमेतत् किल विघ्न-नाशिन् ! । भक्त्योपनीतं पुरतो मया ते गृहाण देवेश ! दयां कुरुष्व ॥ ताम्बूलम्-एला-लवङ्ग-क्रमुकादि-युक्तं हे विश्व-सन्ताप-विनाश-कारिन् ! ॥ ताम्बूलमेतन्मम भक्ति-युक्तं गृहाण देवेश ! निवेदितं मे ॥ दक्षिणा—सर्वं त्वदीयं मम नास्ति किञ्चिद् ददामि किं ते वद दक्षिणायाम्। तथापि देवेश ! मयार्पितं त्वं स्वकीय-मेवाद्य गृहाण नाथ ! ॥ नीराजना-दयानिधिं वेत्ति न को जगत्यां लम्बोदरं त्वां वद दीन बन्धो ! । अजानताऽर्चा सरणीं मयाऽपि नीराजनाऽतः किल कल्प्यते ते ॥ [illegible]-पुनाति विश्वं हि यं क्रमा ते सुरासुरैरर्चित-पाद-पद्म ! । अतो दयानाथ ! यथाविधं तां करोमि भक्त्यानत मस्तकोऽहम् ॥ पुष्पाञ्जलिः-पुष्पाञ्जलिं नाथ समर्पयामि गृहाण देवेश ! जगन्निवास ! । समर्पितं त्वं किल भक्ति-पूर्वं जहासि नो नाथ ! गणेश ! जाने ॥ स्तवनम्-सौख्याकरस्त्वं करुणा-करश्च भक्तार्ति-हर्त्तासि ददासि सर्वम्। अहं न याचे परमीश ! किञ्चिद् [illegible] परमां त्वदीयाम् ॥

[ अथ वरुणोपचारः ] ध्यानम्—आश्रित्य यं भवति धन्यतरा प्रतीची रत्नाकरश्चमुपयाति पयः समूहः। पाशश्च यस्य भवपाश-विनाशकारी तं पाश [illegible] हृदि चिन्तयामि ॥ आवाहनम्-यद् दृष्टिकोणरहिता वसुधा सदैव वन्ध्येव भाति विफलीकृतबीजशक्तिः। तं वारिवारिणमहं वरुणं सदैव धाराधरं सुखकरं प्रियमाह्वयामि ॥ आसनम्—अयि विभो ! [illegible] यदपि हीनमिदं भवतां कृत तदपि भक्तजनं खलु वीक्ष्य मां समुचित प्रियमासनमास्यताम्। पाद्यम्—अहो मदीयं खलु पुण्यसञ्चितं श्रीमद्भिरद्यावधि रक्षितोऽस्मि यत् [illegible] अकिञ्चनोऽहं भवतां कृते यदि तथापि पादार्घ्यमिदं प्रगृह्यताम् ॥ अर्घ्यम्—विमलचम्पकपुष्पसमन्वितं त्रिविधताप-विनाशन-नायकम्। प्रियकरप्रियमर्घ्यमिदं विभो ! परिगृहाण जलाधिप ! पाशभृत् ॥ [illegible]—कस्तूरिका सुरभिचन्दनवासवासि स्वेलालवङ्गलवर्लं परिपूरितश्च। मध्याह्नसूर्यप्रतिबिम्बमिव प्रकाशं दर्पं गृहाण वरमाचनं मयेदम् ॥ मधुपर्कः—सौवर्णपात्रधृतप्रीतिविवर्धकेन मिश्रीकृतेन मधुना पयसा घृतेन। सज्जीकृतं सविधिवन्मधुपर्कसंज्ञं देवो दधातु हृदये करुणाशयेऽस्मिन् ॥ स्नानम्—कङ्कोलपत्रहरिचन्दनवासितेन कश्मीरजेन घनसारसमन्वितेन। एलालवङ्गलवलीविमलोदकेन स्नानं कुरुष्व भगवन्मुनिवेदितेन ॥ रक्तचूर्णम्—निखिलभुवनमध्ये विस्तृता यस्य कीर्तिः सुरनरमुनिवन्द्यो वन्दनीयप्रभावः। स खलु वरुणदेवो भक्तिपूर्वं प्रदत्तं शुचि भवभयहारी [illegible] दधातु ॥ धूपम्—कर्पूरकुंकुमसुगन्धिसुगन्धितं हि कस्तूरिचन्दनद्रवैः परिवर्धितं तम्। विज्ञैर्बुधैश्च विबुधैः समुपासितं त्वं धूपं गृहाण सुरभिं परिपावनञ्च ॥ दीपः—तमोनाशकं दीप्तिदीप्तं प्रदीपं प्रभा-भासुरं भासयन्तं गृहान्तम्। स्फुरज्ज्योतिषं वर्तियुक्तं सुदीपं जगद्वदेव त्वमङ्गीकुरुष्व ॥ नैवेद्यम्—सौवर्णपात्रे समलङ्कृतेऽस्मिन् यथायथं तं विनिवेशितञ्च। सुस्वादुप्रीतं मधुरं नवञ्च नैवेद्यमङ्गीकुरु देवदेव ! ॥ ताम्बूलम्—एलालवङ्गलवलीक्रमुकादियुक्तं सुस्वादुगन्धिसुरभिं सुमनोहरञ्च। भूपैः प्रयाणसमये प्रियमाद्रितं तं ताम्बूलरागमुररीकुरु देवदेव ॥ दक्षिणा—धूर्तैः

त्यरूपाणां पुरुरवार्द्रवसुज्ञकविश्वेदेवपूर्वकं पार्वणविधिना अर्घपिण्डदानसहितपितृतृप्तिकामो युष्मदनुज्ञया दर्शश्राद्धमहं करिष्ये । १६४-दानकल्पोक्तफलकामः सकलपापक्षयपूर्वकशय्यादानमहं करिष्ये । १६५-अमुकगोत्रायाः मम समस्तपापक्षयपूर्वकसकलमनोरथसिद्धिपूर्वकश्रुतिस्मृतिपुराणोक्तफलप्राप्तये इमे उपानहौ इदं छत्रं च इदं शयनवस्त्रं च इमां नौकां च यथानामगोत्राय ब्राह्मणाय तुभ्यमहं संप्रददे । १६६--अद्य मातुः सांवत्सरक्षयाहमहापर्वणि पार्वणविधिना कृतस्य प्रतिसांवत्सरिकश्राद्धस्य समृद्ध्यर्थं मातृपितामहीप्रपितामहीनामक्षय्यतृप्तिप्राप्त्यर्थं दास्यमानानि साज्यानि सगुडानि सशाकानि एकोत्तरशतसङ्ख्याकेभ्यो ब्राह्मणेभ्योऽहं संप्रददे । १६७-मातु प्रतिसंवत्सरक्षयाहमहापर्वणि कृतस्य पार्वणविधिना प्रतिसांवत्सरिकश्राद्धस्य दक्षिणासमृद्ध्यर्थं हिरण्यरजतप्रत्याम्नायीभूतमिदं द्रव्यमुपविष्टेभ्यो ब्राह्मणेभ्योऽहं संप्रददे । १६८-अस्य मातृश्राद्धस्य न्यूनातिरिक्तदोषनिवृत्त्यर्थं दास्यमानामिमां भूयसीं दक्षिणां भूमिदेवेभ्यो ब्राह्मणेभ्योऽहं संप्रददे । १६९--सकलपापक्षयपूर्वकरुद्रालयगमनाद्यनेककल्पव्यापिस्वर्गलोकवासपराद्धं द्वयव्यापिवरुणलोकगमनपूर्वकश्रीमद्विष्णुपदप्राप्त्यर्थं कृतैतत् वटादीनामुत्सर्गमहं करिष्ये । १७०-ममेह जन्मनि । जन्मान्तरे च ज्ञाताज्ञातकामाकामकृतकायिकवाचिकमानसिकसांसर्गिकरहस्यप्रकाश्यमहापातकातिपातकसङ्कीर्णकादिसकलपातकनिवृत्तिरूपचित्तशुद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थम् ( एकविंशतिकुलोद्धारपूर्वकं मम समस्तपितॄणां शाश्वतश्रीरुद्रलोकनिवासार्थं ) वृषोत्सर्गाख्यं कर्माऽहं करिष्ये । १७१--गोत्रस्यादः प्रेतस्य पतितादिमरणजन्यदुर्गतिविनाशार्थं पञ्चकमरणविधिं करिष्ये । १७२-गोत्रस्यादः शर्मणः आत्महत्यादिपापखण्डितत्वादिजनितपापोपशमनार्थमौर्ध्वदेहिके संप्रदानत्वयोग्यतासिद्ध्यर्थं नारायणबलिं करिष्ये । १७३--गोत्रः शर्माऽहम् अद्यारभ्य संवत्सरं यावत् वर्षशतदानप्राप्तये अमुकगोत्रस्यामुकस्य क्षुत्पानिवारणार्थमिमान् मोदकान् चणकद्विदलाद्य पस्करयुतान् जलपात्रं रज्जु कटं पत्रादिकं च यथानामगोत्रेभ्यो ब्राह्मणेभ्यो ब्राह्मणेभ्योऽहं संप्रददे । १७४-गयायात्राधिकारसिद्ध्यर्थं कायिकाद्यनेकपापक्षयपूर्वकं यथाशक्ति गोदानं करिष्ये । १७५-करिष्यमाणगयायात्रानिर्विघ्नपरिसमाप्त्यर्थं गणेशनवग्रहेष्टदेवतानां पूजनं करिष्ये । १७६--मम समस्तपित्रादीनामेकविंशतिकुलोद्धरणार्थं कृतस्य गयाश्राद्धकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थञ्च श्रीगदाधरदेवताप्रीत्यर्थं गयाहवनकर्माऽहं करिष्ये -इति केचित् । १७७--अमुकगोत्रा अमुकनाम्नी मम स्वभर्तृश्वशुरपरश्वशुरादीनां सकलपितॄणां च उद्धारणार्थं गयाश्राद्धस्य साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च श्रीगदाधरदेवताप्रीत्यर्थं गयाहवनकर्माहं करिष्ये ।

[ श्राद्धादि दिनमें क्षौरकर्म विचार ]

यस्मिन्मासि मृताहः स्यात्तन्मासं पक्षमेव वा क्षुरकर्म न कुर्वीत परान्नं च रतिं त्यजेत् ॥ 'मासि मासि गृहस्थस्य पक्षे पक्षे तु यज्विनाम् । ऋतौ मासे यतीनाञ्च यथेष्टं ब्रह्मचारिणाम् ॥ अधिमासो यदा विप्र तदा क्षौरद्वयं भवेत् । मासद्वयेन प्रथमं मासैकेन तथापरम् ॥

[ आधुनिकाचार्य-स्वरचित या परचित ऐसे अनेक प्रकारान्तर श्लोकोंसे अपठ यजमान या उनकी स्त्रियोंसे स्वकार्य साधनकर उदरपूर्तिकर सकता है । ]

[गणेशोपचारः] ध्यानम्--उमा-महेशाऽङ्क-निषण्णरूपं गजाननं मूषक-वाहनं त्वाम् । रक्तोज्ज्वलं दिव्य-पटं दधानं सदा गणेशं हृदि चिन्तयामि ॥ आवाहनम्-आराध्यमानोऽसि सदा सयत्नैः, सन्तोष्यमाणो बहुधा च देवैः । तथापि 'तेऽहं मम चाऽसि त्वं भो !' आवाहये त्वामत एव दीनः ॥ आसनम्-गृहं त्वदीयं सकलं त्वदीयमहं त्वदीयस्तव चासनं वै । स्वीकृत्य देवाऽनुगृहाण दासं त्वदर्थमेवाद्य सुसज्जितं यत् ॥ पाद्यम्-त्वया गृहीतं सुर-संघ-दत्तं पाद्यं पवित्रं बहुधाऽद्ययावत् । परं न देवेश ! कुतोऽपि लब्धं मोदाश्रुभिर्दृष्टमतो गृहाण ॥ अर्घ्यम्-गृही

श्राद्धमहं करिष्ये । १३०—स्वर्गकामो भस्मकूटे भस्मस्नानमहं करिष्ये । १३१-स्वर्गप्राप्तिकामः कपिलेशनमस्कारमहं करिष्ये । १३२-स्वर्गकामो माहेशीकुण्डे श्राद्धमहं करिष्ये । १३३-निजस्वर्गप्राप्तिकामो रुक्मिणीकुण्डे श्राद्धमहं करिष्ये । १३४-विष्णुलोकगमनकामो भस्मकूटे जानुगर्ते श्राद्धमहं करिष्ये । १३५—ऋणत्रयविमुक्तिपूर्वकपितृमुक्तये श्रीजनार्दनदर्शनपूजननमनान्यहं करिष्ये । १३६-मुक्तिनयनकामः प्रेतकूटे श्राद्धकहं करिष्ये । १३७-ब्रह्मपुरनयनकामो वैकुण्ठपर्वते श्राद्धमहं करिष्ये । एवमेव लोहदण्डे हेमकूटे च केवलनामोल्लेखनमेव । १३८-शम्भुपुरगमनकामो गृध्रेश्वरदर्शनपूजननमनान्यहं करिष्ये । १३९-स्वर्गप्राप्तिकामो गृध्रवटनमस्कारमहं करिष्ये । १४०-पितृलोकनमनकामो गृध्रगुहायां श्राद्धमहं करिष्ये । १४१-स्वर्गनयनकामो माहेश्वर्यां धारायां श्राद्धमहं करिष्ये । १४२-शिवलोकगमनकाम ऋणमोचनदर्शनमहं करिष्ये । १४३-शिवलोकगमनकामः पापमोचनेश दर्शनमहं करिष्ये । १४४-स्वविघ्नमोचनपूर्वकपितृशिवपुरनयनकाम आदिपाले गजविनायकदर्शनमहं करिष्ये । १४५—स्वर्गकामो गयादित्यदर्शनमहं करिष्ये । १४६—पितृतारणकाम आदिशिलस्थब्रह्मदर्शनमहं करिष्ये । १४७—ब्रह्मपुरनयनकामः शिलानामौ श्राद्धमहं करिष्ये । १४८—सकलपापक्षयकामो मुण्डपृष्ठाद्रि दर्शनमहं करिष्ये । कुलत्रयस्वर्गनयनकामो मुण्डपृष्ठाद्रि क्रौञ्चपादाङ्कितश्वेतशिलास्थ जलाशये स्नानं तर्पणं चाहं करिष्ये । १४९—ब्रह्मलोकनयनकामो मुण्डपृष्ठाद्रिक्रौञ्चपादांकितश्वेतशिलास्थ विन्द्रादिकुण्डे श्राद्धमहं करिष्ये । १५०—गोत्रस्य शर्मणः स्वस्य परस्य वा यथाकालमस्थोत्तरगयाश्राद्धजन्यफलसमफलप्राप्तिकामनया जनार्दनपूजनादिविशिष्टतद्धस्तदधिभक्तादिपिण्डदानमहं करिष्ये । १५१—अमुकशर्मणो जीवितस्य मम यथाकालमस्थोत्तरगया-श्राद्धजन्यफलसमफलप्राप्तये जनार्दनद्धहस्ते नैवेद्यशेषदधिभक्तपिण्डमहं ददे ।

१५२—सर्वसौभाग्यसिद्धये श्रीमङ्गलापूजनमहं करिष्ये । १५३-अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां कृतगयायात्रोक्तसङ्गभूतघृतप्रघानद्रव्यकरार्वणश्राद्धमहं करिष्ये । १५४-मम समस्तपितॄणां नानानिरयोद्धारणद्वारा शाश्वतब्रह्मविष्ण्वादिलोकावाप्त्यर्थं स्वस्य कायिकवाचिकमानसिकसकलपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं गयायात्रां प्रयागयात्रां काशीयात्रां वा करिष्ये । १५५—प्रयागादौ हेमाद्रिसङ्कल्पं केचिद्वदन्ति तत्तु निर्मूलत्वात् प्रतारणमात्रमिति कमलाकरकृतलघुत्रिस्थलीसेतौ पृ० ७ । १५५—अमुकगोत्राणाममुकशर्मणामस्मत्पित्रादीनां मात्रादीनां मातामहादीनां तत्पत्नीनां पत्न्याः पुत्रस्य दुहितुर्भ्रातुःपितृव्यमातुलतत्पत्नीनां पितृमातृष्वसृभगिनीनां सापत्न्यानां सधवानां पृथग्वा श्वशुरश्वश्रूशालकगुरूपाध्यायमित्रादीनां शर्मणां गोत्राणां वस्वादिरूपाणां च सम्भावितप्रेतत्वनाशपुनरावृत्तिरहितब्रह्मलोकावाप्तिसिध्यर्थं स्वस्य सर्वपापक्षय-ब्रह्मलोकावाप्त्यर्थं प्रेतपर्वते श्राद्धमहं करिष्ये । १५७-अमुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे । १५८-अमुकगोत्रायाः मातामह्या अमुकीदेव्याः कृतैतत्पार्व० । १५९-पित्रादीनां कुलशतोद्धारपूर्वकब्रह्मलोकनयनकामो गयायां श्राद्धमहं करिष्ये । १६०-मम शरीरे सकलरोगविमुक्त्यर्थं मम पुत्रादि कलत्रादेश्च सर्वेष्टजनस्य प्रेतपीडोपशान्त्यर्थं यथानामगोत्राणामनिर्दिष्टपैत्रिकानां सात्विकराजसतामसरूपाणां दिव्यान्तरिक्षभूमिस्थानां विष्णुब्रह्मरुद्रशर्मणामसद्गतीनां स्वर्गलोकाद्यर्थं विष्णुलोकप्राप्त्यर्थमेकोद्दिष्टविधिना एकतन्त्रेण पिण्डत्रयात्मकं त्रिपिण्डीश्राद्धमहं करिष्ये । इति पिशाचमोचनतीर्थे विशेषः । १६१-अमुकगोत्रस्यामुकप्रेतस्य वह्निदाहादिपञ्चकमरणोत्पन्न-दुर्गतिनिवारणार्थं पुत्रादिसकलकुटुम्बरक्षार्थं पुत्तलकैः सह शवदाहे यथास्थानपुत्तलस्थापनपूजनमहं करिष्ये । १६२-अमुकगोत्रस्यामुकशर्मणः ममौर्ध्वदेहिकफलावाप्तये जीवच्छ्राद्धमहं करिष्ये । १६३-अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणां सपत्नीकानां वसुरुद्रादित्यरूपाणाममुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानां वसुरुद्रादि-

प्रमातामहीनाममुकामुकदेवीनामन्येषां दीयमानपिण्डोद्देश्यानामुद्धरणपूर्वकस्वर्गनयनकामो गयाशीर्षे पिण्डदानमहं करिष्ये । ७८—पितृरुद्रपदनयनकामः प्रपितामहनमस्कारमहं करिष्ये । ७९—स्वर्गकामो गायत्रीतीर्थे स्नानं प्रातःसन्ध्योपासनञ्चाहं करिष्ये । ८०—कुलब्राह्मणतानयनकामो गायत्रीतीर्थे श्राद्धमहं करिष्ये । ८१—कुलशतस्वर्गनयनकामः सावित्रीतीर्थे स्नानं मध्याह्नसन्ध्योपासनं चाहं करिष्ये । ८२—कुलशतनयनकामः सरस्वतीतीर्थे स्नानं सायं सन्ध्योपासनं चाहं करिष्ये । ८३—बहुजन्मकृतसन्ध्यालोपजनितपापक्षयमुक्तिकामः सरस्वतीतीर्थे सन्ध्यात्रयवन्दनमहं करिष्ये । ८४—कुलशतब्रह्मलोकनयनकामो विशालायां श्राद्धमहं करिष्ये । ८५—त्रिसप्तकुलोद्धरणकामो वैतरण्यां स्नानमहं करिष्ये । ८६—त्रिसप्तकुलोद्धरणकाम इमां गां रुद्रदैवतां यथाशक्तिकल्पितोपकरणसहितां अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । ८७—यथाकालमरणोत्तरयमद्वारस्थकृष्णवैतरणी नदी सन्तरणकाम इमां कृष्णगवीं यथोपकल्पितोपकरणसहितां रुद्रदैवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । ८८—स्वर्गनयनकामो देवनद्यां श्राद्धमहं करिष्ये । ८९—पितृतारणकामो मार्कण्डेयेश नमस्कारमहं करिष्ये । ९०—पितृतारणकामः कोटीश्वरनमस्कारमहं करिष्ये । ९१—नरकस्थपितृपूतत्वस्वर्गनयनकामः पाण्डुशिलादर्शनमहं करिष्ये । ९२—देवानां शाश्वताव्ययपदप्राप्तिकामः पाण्डुशिलायां श्राद्धमहं करिष्ये । ९३—अयुताश्वमेधफलप्राप्तिकामो मधुस्रवायां स्नानमहं करिष्ये । ९४—सहस्रकुलोद्धरणपूर्वकविष्णुलोकनयनकामो मधुस्रवायां श्राद्धमहं करिष्ये । ९५—स्वर्गनयनकामो दशाश्वमेधतीर्थे श्राद्धमहं करिष्ये । ९६—पितृशिवपुरनयनकामो दशाश्वमेधनमस्कारमहं करिष्ये । ९७—पितृशिवपुरनयनकामो हंसनमस्कारमहं करिष्ये । ९८—ब्रह्मलोकभागिन्वभवनकामो मतङ्गपदे श्राद्धमहं करिष्ये । ९९—आत्ममुक्तिकामो मथाकुण्डे स्नानमहं करिष्ये । १००—पितृमुक्तिकामो मथोकुण्डे तर्पणमहं करिष्ये । १०१—मुक्तिकामो मथोकुण्डे श्राद्धमहं करिष्ये । १०२—स्वर्गनयनकामो रामेश्वरनमस्कारमहं करिष्ये । १०३—पितृस्वर्गनयनकामोऽङ्गारकेश्वरनमस्कारमहं करिष्ये । १०४—अश्वमेधफलसमफलप्राप्तिकामो गयाकूपेश्राद्धमहं करिष्ये । १०५—ज्ञानस्य पितुरमुकशर्मणः पतितस्य सकलपापक्षयनरकोद्धारपूर्वकस्वर्गनयनकाममनया गयाकूपे श्राद्धमहं करिष्ये । १०६—पितृसन्तारणकामो गयाकूपभस्मना स्नानमहं करिष्ये । १०७—ब्रह्मलोकनयनकामो रामपुष्करिण्यां श्राद्धमहं करिष्ये । १०८—त्रिः सप्तकुलोद्धरणकामः सुषुम्नायां श्राद्धमहं करिष्ये । १०९—अश्वमेधफलसमफलप्राप्तिकामो वसिष्ठकुण्डे स्नात्वा वसिष्ठेशनमनमहं करिष्ये । ११०—ब्रह्मलोकनयनकामो धेनुकारण्ये श्राद्धमहं करिष्ये । १११—ब्रह्मलोकनयनकामः कामधेनुपदे श्राद्धमहं करिष्ये । ११२—ब्रह्मलोकनयनकामः कामधेनुनमस्कारमहं करिष्ये । ११३—स्वर्गलोकनयनकामः कर्दमाले श्राद्धमहं करिष्ये । ११४—स्वर्गलोकनयनकामश्चपिण्डकानमस्कारमहं करिष्ये । ११५—पितृमुक्तिकामो गयागजपूजनमहं करिष्ये । एवमेव गयादित्यगायत्रीगदाधरगयागयाशिरसामपि पञ्चानां पूजने तदेवफलम् । तत्र वाक्ये तत्तन्नाममात्रोल्लेखनमिति विशेषः । ११६—कुलशतोद्धारपूर्वकब्रह्मलोकनयनकामनया गयायां श्राद्धमहं करिष्ये । ११७—देवीनां कुलशतसहितविष्णुपुरगमनकामो भरताश्रमे श्राद्धमहं करिष्ये । ११८—ब्रह्मपुरनयनकामः कुण्डपर्वते श्राद्धमहं करिष्ये । ११९—स्वर्गनयनकामो मतङ्गपदे श्राद्धमहं करिष्ये । १२०—ब्रह्मपुरनयनकाम उद्यन्तपर्वते श्राद्धमहं करिष्ये । १२१—कोटिजन्मावच्छिन्नधनाढ्यवेदपारगविप्रभवनकाम उद्यन्तकुण्डे मध्याह्ने स्नात्वा सन्ध्यावन्दनमहं करिष्ये । १२२—दिवौकोगणपूज्यमानपितृसहितात्मब्रह्मलोकनयनकामोगस्त्यपदे श्राद्धमहं करिष्ये । १२३—योनिसंकष्टनिवृत्तिपूर्वकपरब्रह्मलोकगमनकामनया ब्रह्मयोनिप्रवेशनिर्गमावहं करिष्ये । १२४—ब्रह्मण्यकामो गयाकुमारनमनमहं करिष्ये । १२५—सोमलोकनयनकामनया सोमकुण्डे स्नानं तर्पणं चाहं करिष्ये । १२६—सोमलोकनयनकामः सोमकुण्डे श्राद्धमहं करिष्ये । १२७—काकशिलायां काकेभ्यो बलिदानमहं करिष्ये । १२८—स्वर्गप्राप्त्युत्तरब्रह्मलोकप्राप्तिकामः स्वर्गद्वारेशनमनमहं करिष्ये । १२९—स्वर्गनयनपूर्वकस्वनैमल्यकाम आकाशगङ्गायां

कुलशतस्वर्गनयनकामनया मध्याह्नसन्ध्यावन्दनश्राद्धानि करिष्ये । ३८—करिष्यमाणगयायात्राङ्गतया उपवासं करिष्ये । ३९—अमुकमासे अमुकपक्षे अमुकतिथौ अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां करिष्यमाणगयायात्रां पूर्वाङ्गभूतघृतप्रधानद्रव्यकपार्वणश्राद्धमहं करिष्ये । ४०—अश्वमेधफलप्राप्तिकामो यथोक्तफलकामः करिष्यमाणगयाश्राद्धोद्देश्यकगयायात्रामहं करिष्ये । ४१—अश्वमेधसहस्रजन्यफलविलक्षणफलप्राप्तिकामः फल्गुतीर्थे स्नानमहं करिष्ये । ४२—अमुके मासे अमुके पक्षे अमुकतिथौ अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां प्रेतशिलाप्रभासब्रह्मकुण्डप्रेतपर्वतोत्तरमानसोदीचीकनखलदक्षिणमानसफल्गुतीर्थधर्मारण्यमतङ्गवापीब्रह्मयूपकूपपतितपावनक्षेत्रबोधितीर्थब्रह्मसरोवररुद्रपदविष्णुपदब्रह्मपददक्षिणाग्निपदगार्हपत्यपदाहवनीयपदसभ्यपदावसथ्यपदेन्द्रपदसूर्यपदकार्तिकेयपदागस्त्यपदक्रौञ्चपदगणेशपदचन्द्रपदकश्यपपदागयाशिरो गदालोलाक्षयवटगायत्रीतीर्थसावित्रीतीर्थसरस्वतीतीर्थविशालालेलिहानभरताश्रमगृध्रकूटपृष्ठकाशमङ्गगिरिकर्णमुखगोदावरीवैतरणीगोप्रचारदेविकाएककरिणीघृतकुल्यामधुकुल्याकोटितीर्थपाण्डुशिलामधुश्रवादशाश्वमेधहंसतीर्थाद्यनेकतीर्थावयवकसमुदायरूपायविप्रधानमहाक्षेत्रात्मकगयातीर्थप्राप्तिनिमित्तकश्राद्धमहं करिष्ये । ४३—अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहीप्रमातामहीवृद्धप्रमातामहीनाममुकामुकदेवीनां प्रेतत्वविमुक्तिकामः [ संभावितं प्रेतत्वविमुक्त्यर्थं ] प्रेतशिलायां श्राद्धमहं करिष्ये । ४४—स्वर्गप्राप्तिकामनया रामनमस्कारमहं करिष्ये । ४५-स्वर्गकामनया ब्रह्मकुण्डे स्नानतर्पणं चाहं करिष्ये । ४६—पुनरावृत्तिरहितब्रह्मलोकवाप्तिकामः प्रेतपर्वते श्राद्धमहं करिष्ये । ४७—पितृगणगतप्रेतत्वविमुक्तिरवगतप्रेतत्वाभावकामः प्रेतपर्वते तिलमिश्रसक्तूनिःक्षेपमहं करिष्ये । ४८—पापक्षयसूर्यलोकावाप्तिपितृमुक्तिकाम उत्तरमानसे स्नानमहं करिष्ये । ४९—अक्षयतृप्तिकाम उत्तरमानसेश्राद्धमहं करिष्ये । ५०—पितृमुक्तिकाम उदीचीतीर्थे स्नानमहं करिष्ये । ५१—मुक्तिकाम उदीचीतीर्थे श्राद्धमहं करिष्ये । ५२—मुक्तिकामो दक्षिणमासे श्राद्धमहं करिष्ये । ५३—मुक्तिकाम फल्गुतीर्थे श्राद्धमहं करिष्ये । ५४—ब्रह्मलोकनयनकामः पञ्चतीर्थ्यां स्नानमहं करिष्ये । ५५—अक्षयतृप्तिकामो मतङ्गवाप्यां श्राद्धमहं करिष्ये । ५६—स्वर्गकामो धर्मेश्वरनमस्कारमहं करिष्ये । ५७—स्वर्गकामो बोधितरुनमनमहं करिष्ये । ५८—पापक्षयकामो ब्रह्मसरसि स्नानमहं करिष्ये । ५९—वाजपेयजन्यफलसमफलप्राप्तिकामो ब्रह्मकूपप्रदक्षिणामहं करिष्ये । ६०—अद्येत्यादि वृद्धप्रपितामहीनाममुकदेवीनाममुककामोऽमुकपदे श्राद्धमहं करिष्ये । ६१—आत्मसहितकुलशतशिवपुरनयनकामो श्राद्धमहं करिष्ये । ६२—आत्मसहितकुलशतनरकोद्धरणपूर्वकब्रह्मलोकनयनकामो ब्रह्मपदे श्राद्धमहं करिष्ये । ६३—वाजपेयजन्यफलसमफलप्राप्तिकामो दक्षिणाग्निपदे श्राद्धमहं करिष्ये । ६४—राजसूयजन्यफलसमफलप्राप्तिकामो गार्हपत्यपदे श्राद्धमहं करिष्ये । ६५—अश्वमेधफलसमफलप्राप्तिकाम आहवनीयपदे श्राद्धमहं करिष्ये । ६६—सोमलोकप्राप्तिकाम आवसथ्यपदे श्राद्धमहं करिष्ये । ६७—शक्रलोकनयनकाम इन्द्रपदे श्राद्धमहं करिष्ये । ६८—चन्द्रलोकनयनकामश्चन्द्रपदे श्राद्धमहं करिष्ये । ६९—पतितसूर्यपितृसूर्यलोकनयनकामः सूर्यपदे श्राद्धमहं करिष्ये । ७०—शिवपुरनयनकामः कार्तिकेयपदे श्राद्धमहं करिष्ये । ७१—ब्रह्मपुरनयनकामोऽगस्त्यपदे श्राद्धमहं करिष्ये । ७२—ब्रह्मलोकनयनकामः क्रौञ्चपदे श्राद्धमहं करिष्ये । ७३—मोक्षपदनयनकामो मतङ्गपदे श्राद्धमहं करिष्ये । ७४—ब्रह्मलोकनयनकामो गणेशपदे श्राद्धमहं करिष्ये । ७५—ब्रह्मलोकनयनकामः कश्यपपदे श्राद्धमहं करिष्ये । ७६—पितृतारणकामः कनकेशकेदारेशनारसिंहवामनपूजनमहं करिष्ये । ७७—अमुकमासे अमुकपक्षे अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहीप्रमातामहीवृद्ध-

श्रोकृते मोहात् श्राद्धम् इत्यादि पदद्वयं बदरीश्राद्धानन्तरं न गयाश्राद्धनिषेधप्रतिपादकं किन्तु बदरीश्राद्धप्रशंसाबोधकम् नहि निन्दान्यायेन। यथा वा—"अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वाः" इत्यनेन गवाश्वयोर्विधानार्थमितरेषां पशूनामपशुत्वं बोध्यते तद्वत्। तत्र हि पशुत्वं प्रत्यक्षमेव अजादिषु। तच्च नापह्नोतुं शक्यते। अतश्च गवाश्वौ स्तोतुमेव तदितरेषामजादीनां निन्दा। सा च गवाश्वस्तुतावेव पर्यवस्यति। तद्वत्प्रकृतेऽपि बदरीश्राद्धं स्तोतुमेव गयानिन्दा, न तु गयाश्राद्धनिवृत्तौ तात्पर्यम्। इयमेव व्यवस्था वार्षिकमहालयादिश्राद्धादावप्यवगन्तव्या। पित्र्यमानिधनात्कुर्यात् (मनु, ३।२७९) 'मृताहं समतिक्रम्य चाण्डालः कोटिजन्मसु' इत्यादिवाक्यैः जीवता पुरुषेण यावज्जीवमवश्यकर्तव्यताबोधनादक्रमे प्रत्यवायश्रवणादिति।

[ गयातीर्थमें होनेवाले सङ्कल्पोंका संकलन ]

१—अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकदेवशर्मणाम्, एवम्—मात्रादीनां मातामहादीनां च पुनरावृत्तिरहितब्रह्मलोकावाप्तिकामः श्राद्धमहं करिष्ये। २—पुनरावृत्तिरहितब्रह्मलोकावाप्तिकामः प्रेतपर्वते पिण्डदानमहं करिष्ये। ३—प्रेतत्वविमुक्तकामनया मोक्षकामनया वा प्रेतशिलायां श्राद्धमहं करिष्ये। ४—जन्मान्तरशतकृतदुष्कृतविलयकामो (प्रेतत्वविमुक्तिकामो) रामतीर्थे अस्मिन् स्नानमहं करिष्ये। ५—विष्णुलोकगमनकामो रामतीर्थे श्राद्धं पिण्डदानं वा करिष्ये। ६—पित्रादिप्रेतत्वविमुक्तिपूर्वकपितृत्वप्राप्तिकामो रामतीर्थे पितॄणां पिण्डदानमहं करिष्ये। ७—ॐ आत्मनः स्वकर्तृकशिवगमनकामः प्रभासेशनमस्कारमहं करिष्ये। ८—पापक्षयकाम उत्तरमानसे स्नानमहं करिष्ये। ९—पित्रादित्रयमात्रादित्रयमातामहादित्रयाणां शाश्वतब्रह्मलोकप्राप्तिकामो मुक्तिकामो वा श्राद्धमहं करिष्ये। १०—पितृसूर्यलोकनयनकाम (गमनकामनाय) उत्तरार्कस्य [ नतिमहं करिष्ये ] पूजनं करिष्ये। ११—पितृमुक्तिकाम उदीचीतीर्थे स्नानमहं करिष्ये। १२-[ पितृ ] मुक्तिकामः कनखलतीर्थे स्नानं करिष्ये। १३—पितृमुक्तिकामो दक्षिणमानसे स्नानमहं करिष्ये। १४—दशलक्षाश्वमेधजन्य [ अश्वमेधसहस्रसहस्रजन्य ] फलत्रिलक्षणफलप्राप्तिकामः पितॄणां विष्णुलोकप्राप्तिकामो वा फल्गुतीर्थे स्नानमहं करिष्ये। १५—पितृसहितात्मविष्णुपुरनयनकामः [ पित्रादिसहितात्मवैष्णवपद ] फल्गुतीर्थे स्नात्वा गदाधरदर्शनमहं करिष्ये। १६—ब्रह्मलोकगमनकामो धर्मारण्यगमनमहं करिष्ये। १७—सर्वपापक्षयकामो मतङ्गवाप्यां स्नानमहं करिष्ये। १८—[ पितृ ] तारणकामो [ ब्रह्म ] कूपयूपयोर्मध्ये श्राद्धमहं करिष्ये। १९—ऋणत्रयविमुक्तिकामोऽस्मिन् ब्रह्मसरसि स्नानमहं करिष्ये। २०—पितृब्रह्मलोकनयनकामो ब्रह्मतटे श्राद्धमहं करिष्ये। २१—पितृमोक्षकामो ब्रह्मप्रकल्पिताम्रसेचनमहं करिष्ये। २२—वाजपेयजन्यफलसमफलप्राप्तिकामो ब्रह्मयूपप्रदक्षिणमहं करिष्ये। २३—पितृब्रह्मपुरनयनकामो ब्रह्मनमस्कारमहं करिष्ये। २४—(सकल) पापक्षयकामो विष्णुपददर्शनमहं करिष्ये। २५—पितृमोक्षकामो सकलपापक्षयकामो विष्णुपदस्पर्शनमहं करिष्ये। २६—पितृमोक्षकामो विष्णुपदे विष्णुपूजनमहं करिष्ये। २७—आत्मसहितकुलसहस्रोद्धरणपूर्वकविष्णुलोकनयनकामो विष्णुपदे श्राद्धमहं करिष्ये। अद्यामुकगोत्रस्यामुकशर्मणः स्वर्गप्राप्तिकामो गायशिरसि पिण्डदानमहं करिष्ये। २८—अमुकगोत्रस्यामुकशर्मणो मोक्षप्राप्तिकामो गायशिरसि पिण्डदानमहं करिष्ये। ३०—पापक्षयपूर्वकाक्षयस्वर्गप्राप्तिकामो गदालोले स्नानमहं करिष्ये। ३१—पितृलोकनयनकामो गदालोले श्राद्धमहं करिष्ये। ३२—पितॄणामक्षयतृप्तिकामः पितृब्रह्मपुरनयनकामो वाऽक्षयवटे श्राद्धमहं करिष्ये। ३३—पितृब्रह्मलोकनयनकामो ब्रह्मकल्पितान् ब्राह्मणानहं भोजयिष्ये। ३४—कोटिब्राह्मणजनजन्यफलसमफलप्राप्तिकामोऽक्षयवटतले एकं ब्राह्मणमहं भोजयिष्ये। ३५—पितृब्रह्मलोकपुरनयनकामो वटेशदर्शनपूजनमहं करिष्ये। ३६—महाकल्पकृतपापक्षयकामो गयाप्रवेशमहं करिष्ये। ३७—अनोन्यतीर्थे

क्-इति पूर्तकमलाकरे । नमोन्तेन शिवे नैव स्त्रीणां पूजा विधीयते । विरक्तानां च शूद्राणामेवं पूजा प्रकीर्तिता । पञ्चाक्षरस्य श्रुतौ नम आदित्वेपि स्त्रीशूद्रयोनमोन्तत्वम् । अन्ये तु-अन्तेऽपि नमः शब्दमाहुः-इति पूर्तकमलाकरे । दिनकरोद्योते-तु अत्र चाधिकारिणो यद्यपि तत्तत्फलकामाः जैमिनीयषाष्ठन्यायेन च अर्थिनः समर्थाविद्वांसः त्रैवर्णिका एव प्राप्नुवंति तथापि अधिकारी भवेच्छूद्रः पूर्ते धर्मेह्यवैदिके इति वचनाच्छूद्रस्याप्यधिकारः । यत्तु स्त्रीणामनुपनीतानां शूद्राणां च नराधिप । स्थापने नाधिकारोऽस्ति विष्णोर्वा शंकरस्य चेति त्रिस्थलीसेतौ वचनं तदसच्छूद्रविषयं साक्षात्कर्तृत्वप्रतिषेधकं वा अतएव ब्रह्मा तु ब्राह्मणैः स्थाप्यश्चांडालैरपि भैरव इत्यादीनिवचनानि विभेदप्रतिमापरिमाणविशेषविधायकानि वक्ष्यमाणवाक्यान्यपि संगच्छंत इति दिक् । शिवपूजाधिकारिणः लिंगे-ब्राह्मणेनैव पूज्योऽहं शुचिना शुचिनापि वा । स्त्रीशूद्रकरस्पर्शो वज्रादपिसुदुःसहः । अत्र केचित् स्त्री शूद्राणां स्पर्शसहितपूजानिषेधार्थत्वं विशेषणं मन्यते । वस्तुतस्तु स्त्रीशूद्रस्पर्शनिषेधः प्रतिष्ठितलिङ्गशालिग्रामविषयः । यदाप्रतिष्ठितं लिङ्ग० न संस्पृशेदिति प्रतिष्ठितस्पर्शनिषेधात् विहितश्चरलिंगेषु स्पर्शस्त्रीशूद्रयोरपि । न स्थावरेषु लिङ्गेषु सत्यमेतन्मयोच्यते । इति लिंगे चरलिंगेष्वेवस्पर्शविधानाच्च । तत्रावाणपार्थिवयोरेवास्पर्शः कार्यः स्तदुक्तं शिवरहस्ये-स्पर्शः पार्थिवलिङ्गस्य वाणलिङ्गस्य चादरात् । स्त्रीभिः कार्यस्तथा शूद्रैरेवमाह विनिर्णयः-इति चतुर्वर्णैरितिवचनाद्विष्ण्वादिप्रतिष्ठायां शूद्रस्य विकल्पः । किञ्च सर्वेषु भविष्ये चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः । ब्राह्मणैः क्षत्रियैर्लिंगं स्थाप्यं प्रयत्नतः । लिंगं गृही यतिर्वापि संस्थाप्य तु यजेत्सदा इति लिङ्गस्थापने शूद्रस्य नाधिकार ऐति । निष्कर्षस्तु प्रतिमा सर्वैः स्थाप्याः चरलिङ्गं सर्वैः स्थिरलिंगं स्त्रीशूद्रैः स्वयं संकल्पं कृत्व ब्राह्मणद्वारा कर्तव्यम् । केचिद्दीक्षिता दीक्षितभेदेन व्यवस्थां मन्यते । केचिद्द्रव्यद्वारा वदन्ति ।

(मासिकादिश्राद्ध पर विचार)

मृतस्याशौचपूरकपिण्डदानास्थिसञ्चयनसपिण्डीकरणजननरज आदौ दिनस्य ग्रहणं, मासिकवार्षिकादौ तिथेर्ग्रहणमित्यत्र किं मानमिति विचारे 'शुद्धं तु क्रियोदग्राहन' प्रथमे ऽहनि यः पिण्डः, प्रथमेऽह्नि तृतीये वा अस्थिसञ्चयनं मतम्, द्वादशाहे सपिण्डनम्, जननेप्येवमेवाहः, रात्रावेव समुत्पन्ने मृते रजसि सूतके । पूर्वमेव दिनं ग्राह्यं यावन्नैवोदितो रविः इत्यादौ सर्वत्र स्मृतिकारैरहः शब्दोपादानात् सर्वत्र दिनस्यैव ग्रहणं तेषामभिप्रेतं दृश्यते । मासिकाब्दौ तु मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि । प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः" पारणे मरणे नृणां तिस्थितात्कालिकी मता" "मृताहस्तु यथा विधि" इत्यादि विशेषवचनात् मरणसमये या तिथिस्तस्या एव ग्रहणं न तु दिनस्य । एवमाशौचादिविधायकेषु वचनेषु दिनशब्दश्रवणात् तेषु दिनस्यैव ग्रहणम्, मासिकाब्दौ तु तिथिग्रहणस्यैव विशेषतो विधानात्तिथेरेवग्रहणमिति निर्णयः ।

(बदरीक्षेत्र-आदि में श्राद्ध करने पर भी गयाश्राद्ध करना—इसपर विचार)

शिरःकपालं यत्रैतत्पपात ब्राह्मणः पुरा । तत्रैव बदरीक्षेत्रे पिण्डदातुं प्रभुः पुमान् । मोहाद् गयायां दद्याद्यः स पितॄन् पातयेत्स्वकान् । लभते च ततः शापं मारदैतन्मयोदितम् ॥ इति सनत्कुमारसंहितावचनेन बदर्यां कृतश्राद्धस्य यद्यपि गयायां श्राद्धकरणं निषिद्धमिवापाततः प्रतीयते तथापि नेदं निषेधकं वचनम् । "गयाभिगमनं कर्तुं यः शक्तो नाभिगच्छति । शोचन्ति पितरस्तेषां वृथा तस्य परिश्रमः ॥ तस्मात्सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः । प्रदद्याद् विधिवत्पिण्डान् गयां गत्वा समाहितः —इत्यादिवचनेन गयाश्राद्धस्य पितृऋणापाकरणरूपेण नित्यत्वश्रवणात् अकरणे प्रत्यवायश्रवणात् जीवता शक्तेन पुरुषेण गयाश्राद्धस्यावश्यकर्तव्यताप्रतीतेः कैरपि निबन्धकृद्भिर्बदरीश्राद्धानन्तरं गयाश्राद्धस्याकरणालेखनाच्च । अतोऽत्र-

श्वेते तथाऽङ्कम्" इत्युक्त्वा "मृते तु प्रापयेत्तीर्थमथवा तरुमूलकम्। न पिण्डं नोदकं कार्यं न च दाहक्रियां चरेत्। यदि स्नेहात्त्वगेद्दाहं यतिचान्द्रायणं चरेत्" इत्यादिवाक्येन यद्यपि तस्य दाहे यतिचान्द्रायणप्रायश्चित्तं विहितं तथापि अकृतप्रायश्चित्तकुष्ठ्यादिदेहविषयम्, अन्यथा एषां प्रायश्चित्तोपदेशो विफलः स्यात् इत्यादिना निर्णयसिन्धौ रघुनन्दनकृतशुद्धितत्त्वादि-ग्रन्थेषु च कृतप्रायश्चित्तस्य दाहे प्रायश्चित्ताभावमुक्त्वा कृतप्रायश्चित्तस्य श्वित्रिणो दाहादिकं कर्तव्यमिति।

[ प्रतिष्ठाके अधिकारी ]

कल्पतरौ देवीपुराणे वर्णाश्रमविभेदेन देवाः स्थाप्यास्तु नान्यथा। चतुर्वर्णैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः। ब्रह्मा तु ब्राह्मणैः स्थाप्यो गायत्रीसहितः प्रभुः। भैरवोऽपि चतुर्वर्णैरन्त्य-जानां तथा मतः। भास्करः सर्वलोकैस्तु स्थाप्याः पूज्यास्तथैव च। लिंगं गृही यतिर्वापि संस्थाप्य तु यजेत्सदा। भविष्ये—यस्तु पूजयते लिंगं देवादिं च जगत्पतिम्। ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मत्परायणः। तस्य प्रीतः प्रदास्यामि शुभाँल्लोकाननुत्तमान्। निधितत्त्वे स्कान्दे शूद्रः कर्माणि यो नित्यं स्वीयानि कुरुते प्रिये। तस्याहमर्चां गृह्णामि चन्द्रखण्डविभूषिते। ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च पव्रते। एवं दिने दिने देवं पूजयेद्देविकापतिम्। संन्यासीदेवदेवेश प्रणवेनैव पूजयेत्। नमोंतेन शिवेनैव पूजाविधानं पुराणप्रसिद्धजीर्णलिङ्गविषयम्। नारदीये-यः द्रोणार्चितं लिंगं विष्णुं वापि नमेन्नरः। न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि। पाखण्डपूजितं लिंगं नत्वा पाखण्डतां व्रजेत्। आभीरपूजितं लिंगं नत्वा नरकमश्नुते। योषिद्भिः पूजितं लिंगं विष्णुं वापि नमेत्तु यः। सकोटिकुलसंयुक्त आकल्पं रौरवं वसेदिति, इदं नूतनस्थापितलिंगविषयम्। यदा प्रतिष्ठितं लिङ्गं मंत्रवद्भिर्यथा विधिः। तदा प्रभृति शूद्रश्च योषिद्वापि न संस्पृशेदिति तत्रैवोक्तेः। वाराहे-स्त्रीणामनुपनीतानां शूद्राणां च नरेश्वर। स्थापने नाधिकारोस्ति विष्णोर्वा शंकरस्य च॥ तस्मात्त्रैवर्णिकानामेव स्थापनेऽधिकारः। केचनस्त्रीशूद्राणां साक्षात्स्था-पनेऽधिकारो न द्रव्यद्वाराऽस्तीतिवदन्त तेषां पूर्तादौ अधिकारादर्शनात्। तदुक्तं स्कान्दे-सर्ववर्णैस्तु संस्थाप्याः संपूज्याः सर्वदेवताः। लिङ्गान्यपि आकल्परौरवं नरकं व्रजेदित्यादीनि तानि नूतनस्थापितलिङ्गविषयाणि। यदा प्रतिष्ठितं लिङ्गं मंत्रवद्भिर्यथा विधिः। तदा प्रभृति शूद्रश्च योषिद्भिर्वा न संस्पृशेदिति तत्रैवोक्तेः। प्रतिष्ठितायां तु शूद्रादीनां नाधिकारः। स्त्रीणामनुप-नीतानां स्पर्शनाधिकारोस्तीत्युक्तत्वात। यः शूद्रसंस्कृतं लिङ्गं विष्णुं वापि नमेत्तु यः। इहैवात्यंतदुःखानि पश्यत्यामुष्मिमे किमु शूद्रो वानुपनीतो वा स्त्रियो वा पतितोपि वा। केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते। ब्राह्मण्यपि हरं विष्णुं न स्पर्शेच्छ्रेय इच्छति। सनाथामृतनाथां वा तस्या नास्तीह निष्कृतिः इति बृहन्नारदीयस्कांदाद्युक्तेः। उक्तं च त्रिस्थलीसेतौ-चतुर्वर्णैरिति पूर्वोक्तवचनाद्विष्ण्वादिप्रतिष्ठायां शूद्रस्य विकल्प इति तु युक्तं पश्यामः। शूद्रकमलाकरे तु-अतएव स्पर्शनेनाधिकारोस्तीत्यन्यत्र पाठ इत्युक्तम्। तत्त्वं तु स्त्रीशूद्रयोः शालग्रामे नूतनस्थापितदेवे च स्पर्शनिषेधः, अन्यत्र स्पर्शमहिता पूजाकार्या। तदुक्तं वाराहे-शालग्रामे न स्पृशेत्तु हीनवर्णो वसुन्धरे। स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शादिको मतः। मोहाद्यः संस्पृशेच्छूद्रो योषिद्वापि कदाचन। सपतेन्नरके घोरे यावदाभूतसंप्लवे। यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे। दूरादेवास्पृशन्पूजां कारयेत्सुसमाहितः। प्रतिमादौ तु न निषेधः। सर्ववर्णैस्तु संपूज्याः प्रतिमासर्वदेवताः। लिङ्गा-न्यपि च पूज्यानि मणिभिः कल्पितास्तथेति वाराहोक्तेः। अन्ये तु स्पर्शमात्रे शूद्रस्य निषेधः स्थापनं तु भवत्येव। शूद्रस्थापिते चान्यस्य न दोषः शूद्रस्य फलमस्त्येवेत्याहुः अन्ये तु शालग्रामशिलां वापि चक्रांकितशिलां तथा। ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेदिति प्रयोगपारिजाते विष्णुधर्मोक्तेः। चत्वारो ब्राह्मणैः पूज्यास्त्रयोराजन्यजातिभिः। वैश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभिरितिस्कांदाच्च दीक्षितानां भवत्येव पूजेत्याहुः। सर्वथा प्रासादप्रतिष्ठादौ शूद्रस्यास्त्येवाधिकारः। अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके-इति मोक्षधर्मेषु व्यासवचनादितिदि-

## ( नारायणबलिपर विचार )

सर्वत्र स्मृतिषु अन्त्येष्टिप्रस्तावे यो नारायणबलिरुक्तः सप्रेतमात्रे कर्तव्य उत दुर्मरणादिनिमित्तविशेष एवेति शङ्कायां तु समुदितायाम् सर्वत्र दुर्मरणादिनिमित्ते संभाविते, संन्यासिनश्च नारायणबलेः कर्तव्यतया विधानात् केवलमरणे तस्य कर्तव्यत्वमेव नास्ति। यदि मोहात् क्रियेत तदा दोषभागी स्यात् अविहितस्य करणात्। अतश्च यदि भृगुपातादिना दुर्मरणं भवति कस्यचित् तस्य प्रथमतः और्ध्वदैहिककर्मयोग्यतासिध्यर्थं प्रायश्चित्तादिकमनुष्ठाय ततो दशगात्रादिकं कृत्वा एकादशेह्नि नारायणबलिमनुष्ठाय आद्यश्राद्धादिकं कुर्यात्। नारायणबलेरौर्ध्वदेहिककर्मणि उद्देश्यत्वयोग्यताविधायकत्वात्। संन्यासिनस्तु द्वादशाहे नारायणबलिं कुर्यात्। अयमेव सर्वधर्मशास्त्रानुगृहीतस्य सिद्धान्तस्य सारः नतु कदापि केवलमृतौ नारायणबलेरनुष्ठानं कार्यमिति।

### ( सङ्कल्पः )

ॐविष्णुः ३ ॐ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय ॐतत्सत् श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्र० र्घे द्वितीययामे तृतीयमुहूर्ते श्रीश्वेत० स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषेति षण्मनूनामतिक्रम्यमाणे सम्प्रति सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमस्य कलियुगस्य प्रथमचरणे जम्बूद्वीपे भरतखण्डे निखिलजनपावने आर्यावर्तैकदेशे सकलदुष्टसंहारपूर्वकं निखिलसज्जनपरिपालनार्थं दिव्यभौमान्तरिक्षादिविविधोपद्रवैः परिपीडितं भारतं वर्षं समुद्धर्तुं कृतावतारेण समातसुरगणानुतेन नृणां कल्याणदात्रा कारुण्याकुलमानसेन सतां शोकापहर्त्रा जन्तूनां जनिदुःखमृत्युलहरीसन्तापहर्त्रा प्रौढानुग्रहपूर्णशीतलरुचं बिभ्रता श्रीकेदारेश्वरेणाधिष्ठिते निखिलागमपुराणवचोभिः प्रशस्यमाने साधुशीलैः वैदिककर्मानुष्ठाननिरतैर्भूसुरैः शिष्टपरिपालनबद्धपरिकरैः क्षत्रियैः सनातनधर्मोद्धरणैकतानमतिभिर्वैश्यकुलावतंसैः द्विजातिपरिचरणैकतत्परैस्तुरीयजात्यवलम्बिभिश्च विभूषिते सकललोकपावन्याः एतत्प्रान्तीय अमुकनद्याः अमुके तटे विराजमाने अस्मिन् क्षेत्रे विक्रमशके बौद्धावतारे अमुकायने श्रीसूर्ये अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकसूर्ये एव ग्रहगु० गोत्रः शर्मा, सर्वेषां भारतवर्षीयद्विजात्यादिस्त्रीपुंसानां नित्यकल्याणप्राप्त्यर्थं कायिकवाचिकामानसिकसांसर्गिकचतुर्विधपापक्षयपूर्वकमाध्यत्मिकाधिदैविकाधिभौतिकत्रिविधतापोपशान्तिसकलदुःखाशेषनिवृत्ति ( परमपदप्राप्तिव्याध्यादिजरामृत्युरोगभयशोकाद्युपसर्गनिर्मुक्तिधनधान्य ) पुत्रपौत्र [ दीर्घायुष्ट्वैश्वर्यकीर्तिलाभसद्विद्योपार्जनक्षेमस्थैर्यैश्वर्यस्थिरलक्ष्मीगजाश्वादिसम्पत्प्रवृद्धये ] समासदभिवृद्धिपूर्वकजन्मवर्षमासकुण्डलीस्थविषमस्थानस्थितसूर्याद्यन्यतमग्रहसूचितसूचयिष्यमाणैतज्जन्मान्तरोपार्जितसकलबाधानिवृत्तये ( पवित्रतमास्मद्भारतदेशवासिनां सनातनधर्मश्रद्धावतामितोप्यधिकं सनातनधर्मे श्रद्धाभिवृध्यर्थमविद्यमानश्रद्धानामन्येषां सनातनधर्मेऽस्मिन्पवित्रतमे निखिलपुरुषार्थरत्नाकरे सर्वेषां निरतिशयश्रद्धाभक्तिसमुत्पत्त्यर्थं सनातनधर्मानुष्ठानप्रचारादिषु सर्वेषां प्रवृत्तिपरतासिद्धये सनातनधर्मप्रतिपादकानां वेदप्रभृतीनां पुराणान्तानां धार्मिकग्रन्थानां सर्वासां विद्यानां च आचन्द्रार्कमभिवृद्धये पुण्यकालेऽस्मिन् श्रीसच्चिदानन्दसाम्बप्रीत्यर्थं जगद्बीजपुरुषोत्तमलक्ष्मीनारायणप्रीत्यर्थम् एकषष्ट्युत्तरशतधामन्त्रविभागपक्षेण सनवग्रहमखहवनात्मकमहारुद्रम् [ पुरुषसूक्तेन लक्ष्मीसूक्तेन च प्रत्यृचं षष्टिसहस्राधिकैकलक्षसंख्यं होमात्मकं श्रीलक्ष्मीनारायणयागं ] एभिर्द्विजैः शमदमादिनिखिलगुणगणभरितैः सह अद्यारभ्य करिष्ये।

### [ कुष्ठिकी उत्तर क्रियापर विचार ]

कस्य चित्त्रैवर्णिकान्यतमस्य श्वित्रिणो दैवान्मृतौ तदुत्तराधिकारिभिस्तस्य दाहः कर्तव्यो न वेति प्रश्ने उत्तरम्—"शृणु कुष्ठिगणं विप्र उत्तरोत्तरतो गुरुम्। विकर्चूमणतास्रौ च कृष्ण-

वचनात् । "नैऋ तानां हितार्थाय जगत्कर्ता नृपः प्रभुः । निर्ममे मलिनं मासं प्रेतानां च हिताय वै" । अत्र प्रेतक्रियाः सर्वाः कर्तव्यास्तु मलिम्लुचे" इति भविष्यपुराणात् । शय्यादानं वृषोत्सर्गश्च शक्तेन अशौचान्ते मलमासेऽप्यवश्यं कर्तव्यम् । मत्स्यपुराणे एकादशाहश्राद्धतुल्याविधानात् इति ।

( जीवच्छ्राद्धानन्तरनित्यनैमित्तिककर्म में अधिकार विचार )

केनचिच्छ्रद्धालुना पुरुषेण आत्मसन्तरणार्थं जीवच्छ्राद्धे कृते तदनन्तरं तस्य नित्यनैमित्तिककाम्यादिकर्मसु कर्तव्यता विषयकसंशये सञ्जाते "नित्यनैमित्तिकादीनि कुर्याद्वा सन्त्य- जेत वा" इत्यादिभिर्लिङ्गपुराणोक्तवचनैरिदमवगम्यते यत् सन्ध्याजपहोमादावश्यके कर्मणि तस्याधिकारोऽस्ति । एवं प्रतिग्रहादिना न सञ्चयमकुर्वन् शरीरमात्रोपयोगिकं प्रतिग्राहादिकं कर्तुं शक्नोति । येन कर्मणा विना शरीरधारणं न शक्यते कर्तुं तत्र कर्मण्यार्थादधिकारः सिद्ध्यत्येव । एवं जीवश्राद्धानन्तरं तस्य पुत्रादावुत्पन्ने तदीयजातकर्मादिसंस्कारेषु तस्याधिकारोऽस्त्येव । तस्य सर्वं प्रकर्तव्यं पुत्रोऽपि ब्रह्मविद् भवेत् । कन्यका यदि सञ्जाता पश्चात्तस्य महात्मनः । मुच्यते नात्र सन्देहः पितरौ नरकादपि । पश्चाज्जाते कुमारे च स्वक्षेत्रे चात्मनो यदि । इत्यादि- वचनात् अनेन जीवच्छ्राद्धेन श्राद्धकर्तुः पित्रादीनामपि चोत्तमलोकप्राप्तिश्रवणादिहलोके तस्य श्राद्धानन्तरं यावज्जीवं केनापि प्रकारेणापवित्रताऽपि नास्तीति सिद्धम् ।

( पिताके क्षयाहे में श्राद्धपर विचार )

मृतस्य पितुः क्षयाहे पुत्रेण श्राद्धमेकोद्दिष्टविधिना कार्यम् उत पार्वणविधानेन इति प्रश्ने—मिताक्षरानिर्णयसिन्ध्वादिनिबन्धग्रन्थपर्यालोचनयाऽयमेव निर्णयः सारभूतोऽवगम्यते । ग्रन्थेषु हि "सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतः । मातापित्रोः पृथक्कुर्यादेकोद्दिष्टं मृतेऽहनि" एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीयाद् भवेच्च पितृघातकः" इत्यादि यमव्यासादिवचनैर्मृततिथावेकोद्दिष्टमेव कार्यम् । अन्यथा दोष इत्यवगम्यते । "आपाद्य च सपिण्डत्वमौरसो विधिवत्सुतः । कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि । "सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत् सदा । प्रतिसंवत्सरं विद्वाँश्छागलेयोदितो विधिः—इत्यादि जमदग्निशातातपवचनैस्तु क्षयेऽहनि पार्वणश्राद्धस्यैव कर्तव्यता प्रतीयते । सति चैवं स्मृति द्वैविध्ये शाश्वतो यद्यपि विकल्प एव प्राप्नोति तथापि "देशधर्मं समाश्रित्य वंशधर्मं तथाऽपरे । क्षयः श्राद्धमिच्छन्ति" इत्यादिवचनेन देशधर्मस्य कुलपरम्परागतधर्मस्य चावश्यपरिपालनीयत्वात् त्यागे च दोषस्मरणात् यस्मिन् देशे यस्मिन् कुले मृतेऽहनि स्वपूर्वजैः पितुः पार्वणमेवानुष्ठीयते तद्देशकुलोत्पन्नेन पुरुषेण पार्वणमेवानुष्ठेयम् यस्मिन् कुले चैकोद्दिष्टं पूर्वैरनुष्ठितं तत्कुलोत्पन्नेन तदे- वानुष्ठेयम् । अयमेव सिद्धान्तो निर्णयसिन्धुकारेण मिताक्षराकारेण च स्पष्टमभिहितः । "वस्तुतस्तु सर्वेषां पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पः । स च देशाचारव्यवस्थित इति सर्वनिबन्धसिद्धान्तः ( इति निर्णयसिन्धौ ) । क्षयाहे पार्वणैकोद्दिष्टयोर्विकल्प एक तथा वंशसमाचारव्यवस्थायां सत्यां व्यवस्थितो विकल्पः । असत्यामैच्छिकः" ( मिताक्षरा ) इति अस्माकं यजुर्वेदिनामाचार्य- वरेण भगवता याज्ञवल्क्येन तु—"मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् । प्रति संवत्सरं चैव" याज्ञ० १।२५६ इति स्पष्टमेवमृततिथावेकोद्दिष्टस्य कर्तव्यता विहिता । ( अत्र श्लोके एको- द्दिष्टपदाभावेऽपि पूर्वतः एकोद्दिष्टपदमनुवर्तते । तथैव व्याख्यातं मिताक्षरायाम् 'प्रति संवत्सरं मृतेऽहनि एकोद्दिष्टमुपदिष्टं योगीश्वरेण" इति ) । अतश्चाचार्योपदिष्टत्वादेवपक्षोऽयमस्मद्देशीयै- र्यजुर्वेदिभिरस्मत्पूर्वतनैः सुदृढमादृत इत्यस्माभिरयमेव पक्षः सुतरामादरणीय इति ।

मलमासे पितुराद्यश्राद्धे क्रियमाणे वृषोत्सर्गः कर्त्तव्यो न वेति विप्रतिपत्तौ—"नित्यनैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे। तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च। इति। नित्य-नैमित्तिककर्मणोः प्रेतश्राद्धस्य च कर्तव्यत्वाविधानात्। 'एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः। प्रेतत्वं सुस्थिरं तस्य दत्तैश्श्राद्धशतैरपि' इति वचनात्। एकादशाहिकवृषोत्सर्गस्य नित्यत्व-बोधनात्। 'अशौचान्तद्वितीयेऽह्नि शय्यां दद्याद्विचक्षणः। वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा—इति वायुपुराणीयव्यासवचनात्, अशौचान्तद्वितीया निमित्तकत्वात्, तस्य नित्यनैमित्तिकत्वे पर्यवसानात्। एकादशाहिक—वृषोत्सर्गस्य तदैव नियतकालकर्तव्यतया मुहूर्तविषयाऽभावात् गुर्वस्तशुक्रस्तादावपि एकादशाहपाते सकलशिष्टैरपि कर्तव्याऽऽचारदर्शनात्। शय्या-दिदानवत् नियतकालकर्तव्यत्वात् आद्यश्राद्धवत् कर्तव्य एव। षोडश श्राद्धवत् तस्याऽपि प्रेतोपकारकत्वात्। बौधायनेनाऽपि काम्यनैमित्तकयोः पार्थक्यं निरूप्य कार्तिक्यादौ क्रियमाणस्य काम्यस्यैव निषेधात्। एकादशादिकस्य नैमित्तकत्वेन कर्तव्योपदेशात्। वृषोत्सर्गमात्रस्य बाधकाऽभावाच्च। ननु ? अग्न्याधेयम् इति बृहस्पतिवचनस्य बाधकसत्वेऽपि कथं बाधकाऽभाव इति तत्रैव वचने यज्ञदान-व्रतानि चेति पूर्वत्र व्रतशब्दोपादानात्। पुर्नदेवव्रतवृषोत्सर्गेत्यत्र व्रतशब्दस्य व्रतपरत्वे पुनरुक्त्यापत्तेर्न व्रतपरत्वम्। तर्हि देवव्रतशब्दस्य वृषोत्सर्गशब्दे सम्बन्धात्। देवव्रतरूपो यो वृषोत्सर्गः कार्तिक्यादौ क्रियमाणः तत्रैव बाधकप्रसक्तेः न तु वृषोत्सर्गमात्रे। प्रेतवृषोत्सर्गादौ एकादशाहीयेऽपि तत्रैव कृत्यरत्नाकरे श्रीचण्डेश्वरठक्कुरस्यापि व्याख्यानात्। तद्यथा कृत्यरत्नाकरे मलिम्लुचतरङ्गे—"अग्न्याधेयं प्रतिष्ठां च यज्ञ-दान-व्रतानि च। देवव्रतवृषोत्सर्गचूडाकरणमेखलाः। माङ्गल्यमभिषेकं च मलमासे विवर्जयेत्। अग्न्याधेयमग्न्या-धानम्, स्वर्गादिदेवतामुद्दिश्य व्रतरूपो यो वृषोत्सर्गः तथा च षष्ठीव्रते मत्स्यपुराणम्—"कार्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत्। शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम्" तथा देवी-क्रमपूजायाम् देवीपुराणम्—"गवोत्सर्गश्च कर्तव्यो नीलं वा वृषमुत्सृजेत्"। इत्यादि। तथैव द्वैतनिर्णये वाचस्पतिमिश्रैरप्युक्तत्वात्। यथा-एतच्च कर्म कार्तिकी चैत्री रेवत्याश्वयुजीषु चतसृष्विति। किन्तु कार्तिकी चैत्र्यादिकं प्रथमाब्दिकव्यतिरिक्तमिह ग्राह्यम्। प्रथमाऽब्दे शैवाभ्युदयिककाम्यकर्मनिषेधात्। एकादशाहे तु तद्विधेर्निरवकाशतया अगत्यैवाऽभ्युदयिकाऽभावे वृषोत्सर्गसिद्धेः। आभ्युदयिकं चात्रैच्छिकत्वेनाऽवश्यकम्। कार्तिक्यां वृषोत्सर्गात् प्राक् अपूपत्रयदानमपि। कार्तिक्यां अपूपां दत्वा इति विशेषश्रवणात्। तदयमत्रोऽनुष्ठानक्रमः—ॐ अद्य कार्तिक्यां चैत्र्यां वा अमुकगोत्रस्य पितुरमुकशर्मणः मोक्षकामः सोपकरणवत्सतर्यष्टकसहितनीलवृषोत्सर्गमहं करिष्ये। यथोक्तलक्षणवृषोत्सर्गे नीलपदमपहाय वत्सतर्यचतुष्टयपदे अष्टपदस्थाने चतुष्टयपदं प्रक्षिप्य इदमेव वाक्यम्। प्रेतलोकविमुक्तिस्वर्गलोकप्राप्ती तु न फलम्—"अहन्येकादशे प्राप्ते यस्य चेत्सृज्यते वृषः। प्रेतलोकाद्विमुक्तः सन् स्वर्गलोकं समश्नुते" इति विशिष्य आम्नानात्। विश्वजिन्न्यायसिद्धस्तु स्वर्गः कार्तिक्यादावप्यनिरुद्ध एवेति। तथा च नरहरिकृते द्वैतनिर्णये—एकादशाहीय—वृषोत्सर्गे प्रेतलोकविमुक्तिपूर्वकस्वर्गलोकप्राप्तिः फलम् अर्थवाद-श्रुतेः, न तु विश्वजिन्न्यायात् स्वर्गः प्रकृते तदनवतारात्। तथाहि- यत्फलविशेषतो न श्रुतम्। निष्फले च प्रवृत्त्यनुपपत्तिः। तत्र न्यायः प्रवर्तते। अत्र च अर्थवादादिकं प्रेतलोकविमुक्त्यादि-फलं श्रुतम्। अतः कथं तदवतारः। न च सतोऽप्यर्थवादस्य समभिव्याहृतशय्यादिपञ्चकफलाऽऽकाङ्क्षापूरणाऽक्षमत्वेनाकाङ्क्षा विरहात्, तदफलत्वे साधारणफलं स्वर्गः-इति न्यायावतार इति वाच्यम्, वृषोत्सर्गफलबोधकस्यार्थवादस्य। "एकादशाहे प्रेतस्य यस्य चोत्सृजते वृषः। प्रेतलोकाद्विमुच्येत स्वर्गलोकं स गच्छति। इत्येवं रूपस्य तस्य तत्साकाङ्क्षत्वात्। श्रुतफलत्यागोऽ-श्रुतफलकल्पनं च न्यायाऽवतारेस्यादिति महद्गौरवमितिनिर्णीतत्वात्। अशौचान्तेऽपि कर्तव्यं वृषोत्सर्गादिकं सुतैः। मलिम्लुचादिदोषस्तु न ग्राह्यस्तत्र कश्चन" इति विशारदप्रभृति

नाद्विकालः कर्तव्येति आग्नेयामति विशेषवचन प्रकृतिनिर्दिष्टस्यैव क्रमस्य विकृतावपि स्वीकार्यत्वात्। अतएव माधवके अग्निषोमीयसवनीयानुबन्ध्यानां प्रयाजाने कस्मिन् काले सहानुष्ठान कस्य प्रथममनुष्ठानमिति संशये स्थानप्रमाणविशेषेण सवनीयस्य प्रथममनुष्ठाने कृते अवशिष्टयोरग्नीषोमीयानुबन्ध्ययोर्मध्ये कस्य प्रथममनुष्ठानमिति संशये उत्पन्ने सति तत्र विकृतौ विशेषाश्रवणात् प्रकृतिवदः क्रम एवानुष्ठेयः। अतश्च अग्नीषोमीयस्य प्रथमनुष्ठानं तत आनुबन्ध्यस्येति निर्णीतं पञ्चमे। तद्वदत्रापि विकृतिभूते प्रतिष्ठादौ यत्र विशेषवचनं नास्ति तत्र ग्रहयज्ञादौ एव क्रमोऽनुष्ठेय इति प्रथममग्निस्थापनं ततः प्रधानस्थापनम्॥ यत्र त्वेकादशरुद्रस्थापनादौ नैवं क्रम आश्रयितुं शक्यते तत्र पूर्वेद्युः प्रधानस्थापनस्य विहितत्वात् द्वितीयदिने ग्रहयज्ञादौ एव अग्निस्थापनस्य कर्तव्यत्वात्। तत्र भवतु क्रमवैपरीत्यं पूर्वेद्युः प्रधानस्थापनमपरेद्युरग्निस्थापनमिति। अन्यत्र सर्वत्रापि पूर्वोक्त एव क्रमः। अश्वलायनानां तु स्वगृह्योक्तत्वादौ प्रधान-स्थापनं ततोऽग्निस्थापनमिति युक्तमेव। यत्रापि अन्यप्रधानेन साकं ग्रहयज्ञानुष्ठानं यथा महारुद्रादौ तत्र प्रधानापूर्वं ग्रहस्थापनस्य विशिष्टविधानात् तथैव कर्तव्यम्। प्रतिष्ठादौ तु प्रधा-नानन्तरमिति विशेषः। इति शम्।

ग्रहयज्ञोऽपि यदा परिशिष्टोक्तप्रकारेण क्रियते तदा ग्रहस्थापनानन्तरमग्निस्थापनादि कार्यम्। यदा तु पौराणो ग्रहमखस्तदा "कुण्डेऽग्नि विप्रकर्षितं कृत्वा ब्राह्मणवाचनम्। अग्निप्रणयनं कृत्वा तेनामावाहयेत्सुरान्-इति मात्स्यादग्निस्थापनोत्तरं ग्रहस्थापनमिति निष्कर्ष इति प्रयोगचिन्तामणौ।

( अग्निचक्रविचार )

कश्चित् प्रधानभूतस्य कर्मणोऽङ्गत्वेनानुष्ठीयमानस्य होमादेः कालाग्निचक्रादिचिन्तनमावश्यकं न वेति विचारे प्रधानकालादेवाश्रयणीयत्वस्य शास्त्रसिद्धत्वेन प्रधानसन्निधावङ्गानां स्वतन्त्र्याभावात् तेषां कालादिविचारस्य अपेक्षितमेव। यद्यङ्गानां कालापेक्षा क्रियेत् तदा प्रधानस्य स्वकालातिपतिरूपदापाप्त्या प्रधानविरोधः प्रसज्यते। स चायुक्तः। अतः प्रधानानुगमनात् अन्यथा नयनस्य शास्त्रसिद्धतया अङ्गगुणविरोधे च तादर्थ्यात् इति मीमांसान्यायसिद्धतया च नाङ्गविषये कालाग्निचक्रादिचिन्तनमिति।

( आभ्युदयिकश्राद्धमें ब्राह्मणोपवेशन प्रकार )

आभ्युदयिकश्राद्धे ब्राह्मणोपवेशनप्रकारे चत्वारः पक्षाः। तत्रैकः पार्वणवत्। अर्थात्-पश्चिमदेशे प्राङ्मुखा दैवब्राह्मणाः, ततो दक्षिणत उदङ्मुखाः पैतृका इति। द्वितीयः पक्षः-दक्षिणत उदङ्मुखाः वैश्वदेविका ब्राह्मणाः, पश्चिमतः प्राङ्मुखाः पैतृका इति। तृतीयः पक्षः-दैविकानां पैतृकानां च सर्वेषां ब्राह्मणानां प्राङ्मुखत्वमुदङ्मुखत्वं वेति। चतुर्थस्तु-उत्तरतः प्राङ्मुखो वैश्वदेविकान्, दक्षिणत उदङ्मुखान् पैतृकानुपवेशयन्तीति। इमे चत्वारोऽपि पक्षाः स्मृतिकारैरुक्ताः। तत्र सर्वत्रापि ब्राह्मणानामुपवेशनक्रमः पूजाप्रकारश्च प्रादक्षिण्येनैव कर्तव्यः। तत्रापि इदानीं या विशेषतो वैदिकैः समादृतः प्रचलितो द्वितीयः पक्षः तस्मिन्नपि पक्षे दैवपितृब्राह्मणमध्ये कर्ता उदङ्मुख उपविश्य प्रथमं दैविकान् प्रागारभ्य प्रत्यगपवर्गं पूजयित्वा ततः पैतृकान् दक्षिणत आरभ्य उदगपवर्गं पूजयेत्। एवं कृते प्रादक्षिण्येन पूजनं सिद्धं भवति। अतोऽयमपि पक्षः सर्वथा शास्त्रीय एव। दर्भवटुपक्षे च वैश्वदेविकं दर्भवटुमुदङ्मुखं, पैतृकांश्च प्राङ्मुखानुपवि-श्य दक्षिणत आरभ्य पूजनादिकं क्रियते तदपि इममेव द्वितीयं पक्षमवलम्ब्य क्रियते। अस्मिन्पक्षे कुशवटूनां मध्ये कर्तुरुपवेशनार्थं स्थानसौकर्याभावात् सर्वतः पश्चादुपविश्य क्रियते इति द्वितीय-पक्षस्य प्रकारान्तरं पक्षो ज्ञेयः। अतोऽयमपि पक्षः सर्वथाशास्त्रानुमत एव। सर्वेषामुदङ्मुखत्वरूपे तृतीयपक्षेऽपि प्रादक्षिण्यसिद्ध्यर्थं प्रागारभ्य प्रत्यगपवर्गमेव पूजादिकं सम्पादनीयमिति विशेषः। सर्वं चैतत् रुद्रकल्पद्रुमादौ स्पष्टम्।

इति सूत्रात् प्रधानहोमसमाप्त्यनन्तरमेव विधानात् । मध्ये तदनुष्ठाने क्रमभङ्गापत्त्या कर्मवैगुण्यावश्यंभावात् स्विष्टकृच्छब्दासामञ्जस्याच्च । सुष्ठु इमं करोतीति हि तस्य व्युत्पत्तिः । सुष्ठु-करणं तु कर्मसमाप्तावेव भवति न मध्ये । अतश्च यदर्थं स्विष्टकृत् होमस्तत्समाप्तावेव स कर्तुं शक्यते इत्यन्ते एव स्विष्टकृद्धोमः । एतेन—'स्विष्टकृद्यागो माऽस्तु शेषस्य तत्स्थापनस्य च प्रयोजकः परप्रयुक्तद्रव्योपजीवित्वात् शेषस्य तस्य प्रयोजक एवं संस्कार्यत्वात् । अन्यथा पशुपुरोडाशेऽपि स्विष्टकृत्स्यात् । तेन "एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकाला" इति सूत्रोक्ते-स्तन्त्ररूपैककाले एकः स्विष्टकृत् । कालभेदे तु नाना । तथा च प्रथमदिने चरोः स्विष्टकृत् । अन्ते तु तिलादेरिति स्विष्टकृद्यागद्वयं कार्यम् । यत्र तु प्रत्यहं चरुहोमस्तत्र प्रत्यहं स्विष्टकृत्" इति प्रयोगचिन्तामणिकारोक्तं प्रत्युक्तमिति बोध्यम् ।

[ शान्तिक पौष्टिककर्म में नान्दीश्राद्ध विचार ]

शान्तिकपौष्टिकादिकर्म यदि जीवत्पितृकेण क्रियते तदा तदङ्गभूते नान्दीश्राद्धे येभ्य एवेति वाक्येन पितामहादिभ्य एव पिण्डदानं याजुषैः कार्यम् । न चैतच्छङ्कनीयम्—यत् श्लोकस्यास्य पूर्वार्द्धे वृद्धौ तीर्थेत्यादिना निमित्तानां परिगणनात् तत्रैवायं नियमो नान्यत्र जलाशयोत्सर्गादाविति" तत्र वृद्ध्यादीनां पृथक् पृथङ्निमित्तेन स्वीकारे प्रतिनिमित्तं वाक्यपरिसमाप्तौ वाक्यभेदप्रसङ्गात् । "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यत्र यथा पदद्वयेन अवस्थाविशेषो लक्ष्यते एवमत्रापि वृद्ध्यादिपदैर्जीवत्पितृककर्तृकश्राद्धमात्रस्य लक्षणात् । तेन शान्तिकपौष्टिका-दिकर्मस्वपि कर्माङ्गभूतनान्दीश्राद्धे येभ्य एवेति न्यायोऽनुसर्तव्यः । शाङ्खायनैस्तु न स्वीक्रियत एतत् ।

[ महारुद्रादि में मधुपर्क का विचार ]

महारुद्रादौ भिन्नशाखीयानां ब्राह्मणानां यजमानशाखयैव मधुपर्क इति पक्षस्य सर्वदेशेषु भूयान् प्रचारः । युक्तं चैतत् । अत्र यजमानस्य कर्तृकर्मणि कर्तृशाखयैव कर्मानुष्ठा-नस्याचितत्वात् । "यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् । अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति" इति परशाखया कर्मानुष्ठाने दोषाश्रवणात् । शाखान्तरेणानुष्ठाने तच्छाखीयमन्त्राणां यजमानादिनाऽनध्येयत्वदशायामेतदर्थमध्ययनकल्पगौरवापत्तेः । 'अर्च्यस्य या भवेच्छाखेति वचनं सोमयागपरम् । अर्च्यस्य यच्छाखीयं कर्म तच्छाखया मधुपर्कमाच-रन्ति चातुश्चरणो मैथिलाः । तदयुक्तमिति नारायणभट्टाः । यतो मधुपर्कार्हेषु स्नातकराजमातुलादिषु कर्माभावेन एतस्यासंभवात् । क्वचिदधीयमानशाखायाः क्वचिच्च कर्म सम्बन्ध्या ग्रहणे वैरूप्यापत्तेः । अतः सोमयागेऽपि एकरूपेणाधीयमानशाखयैव मधुपर्क इति ।

( प्रतिष्ठादि में अग्निस्थापन विचार )

प्रतिष्ठादौ तत्तत्प्रधानदेवतास्थापनानन्तरमग्निस्थापनम्, अग्निस्थापनानन्तरं वा प्रधानस्थापनमिति विवादे "आश्वलायनगृह्यपरिशिष्टे—इत्यनेन प्रधानस्थापनानन्तरमग्निस्थापनस्य विहितत्वात् मयूखकारादिभिस्तथैव लेखनात् आश्वलायनैस्तदनुसारेणानुष्ठानाच्च "अनुक्तमन्यतो ग्राह्यम्" इति न्यायेन अस्माभिर्याजुषैरपि तथैवानुष्ठेयम् । अर्थात् प्रथमतः प्रधानस्थापन [illegible] तत्र वर्दं शेचयाम यानुषाणामस्माकं सूत्रे परिशिष्टादौ ग्रहयज्ञस्य प्रतिष्ठादेर्वाऽनुक्तत्वेऽपि तत्र शाखान्तरस्यैव शरणीकरणीयत्वेन तत्र च बह्वृचशाखाया दिग्वेदग- [illegible] तद्गृहीतुं [illegible] किन्तु यजुर्वेदगतायाः कस्याश्चिच्छाखाया एव सन्निकृष्टत्वेन सैवानुसर्तव्या इति समुचितम् । तत्र बौधायनगृह्ये ग्रहयज्ञप्रकरणे [प्र० ६, खं० १५] [illegible]नानन्तरमेव [illegible] विहितम् । तदेवास्माभिर्गृहीतुं युक्तम् । तस्या यजुर्वेदान्तर्गततैत्तिरीयशाखीयत्वात् । ग्रहयज्ञस्य च सर्वप्रकृतित्वस्य सर्वसम्मतत्वात् । प्रकृति-

प्रदक्षिणां करोमि त्वां प्रणताघौघनाशिनी ॥ प्रदक्षिणां स० । अद्य पूर्वोक्त० प्रीत्यर्थं गङ्गाभागीरथीपूजान्ते क्षीराऽर्घ्यप्रदानं करिष्ये । ब्रह्मकमण्डलुसम्भूते गङ्गे त्रिपथगामिनि ! त्रैलोक्यवन्दिते ! देवि गृहाणाऽर्घ्यं नमोऽस्तु ते । गङ्गायै नमः—इदमर्घ्यम् । प्रालेयाचलसम्भूते प्राचीनाब्धिसमागमे । प्राणिनां भव रोगघ्नी पूजां सम्पूर्णतां कुरु ॥ पुत्रपौत्रधनधान्यपशुपुण्यफलोदयम् । देहि मे देवि ! भक्तिं ते त्वत्पादकमले सदा ॥ प्रार्थना । इति ।

## ॥ अथ कृष्णपूजनक्रमः ॥

नारद उवाच—श्रीमद्भागवतं चैतत्पुराणं ब्रह्मसम्मितम् । सप्ताहश्रवणं तस्य स्वतिपुण्यप्रदं भवेत् ॥ सङ्क्षेपेण विधिं वक्ष्ये तत्प्रदानसमन्वितम् । गणेशपूजनं कुर्यात्पूर्वं वै स्वस्तिवाचनम् ॥ कलशस्थापनं तत्र वरुणावाहनं तथा । मण्डले सर्वतोभद्रे श्रीकृष्णस्य च पूजनम् ॥ रुक्मिणीसहितस्यैव गोपालसहितस्य च ॥ अङ्गोपाङ्गायुधानान्तु पूजनं परितस्तथा ॥ उपचारैः षोडशभिर्भक्तिभावेन संयुतः । व्यासस्य वरणं कुर्यात्सुवर्णैर्भूषणैस्ततः ॥ द्विजहस्ताक्षरेणैव लिखितं शोधितं शुभम् । पट्टिकावेष्टनयुतं पुस्तकं पूजयेत्ततः ॥ व्यासमुच्चासने कृत्वा तदग्रे पुस्तकं न्यसेत् । मित्रवर्गेण सहितः सकुटुम्बः समाहितः ॥ शृणुयान्तं द्विजं चित्ते शुकरूपं विचारयन् । मण्डपं कदलीस्तम्भं वितानैस्तोरणैर्युतम् ॥ कुर्यादास्तरणं भूरि श्रोतॄणां सुखहेतवे । उदङ्मुखो भवेद्वक्ता श्रोता वै प्राङ्मुखस्तथा ॥ प्राङ्मुखश्चेद्भवेद्वक्ता श्रोता चोदङ्मुखस्तथा । आसूर्योदयमारभ्य सार्धं त्रिप्रहरान्तिकम् ॥ वाचनीया कथा सम्यक् सावधानतयाऽनिशम् । मध्यमं सुस्वरं कृत्वा स्पष्टार्थं विरलाक्षरम् ॥ कथाविरामः कर्तव्यो मध्याह्ने घटिकाद्वयम् । तत्कथामनुकार्यं वै कीर्तनं वैष्णवैः सह ॥ हविष्यान्नं तु कर्तव्यो लघ्वाहारः सुखावहः । फलाहारेण वा स्थेयमेकभक्तेन वा पुनः ॥ एवं पारायणं श्रुत्वा शुभं सप्तदिनावधि । श्रीकृष्णपूजनं कृत्वा समाप्तौ हवनं चरेत् ॥ गायत्र्या दशमं स्कन्धश्लोकैर्वा वेदरीतितः । हेमसिंहासनस्थं सत्पुस्तकं शुकरूपिणे ॥ दद्याद् व्यासाय विधिवदलङ्कृत्य विधानतः । साङ्गतासिद्धये दद्यात्सौवर्णीं दक्षिणां ततः ॥ करौ द्वौ सम्पुटीकृत्य विष्णोश्च विनयं वदेत् । माहात्म्यं पुस्तकस्यैव व्यासस्य स्तुतिरेव च । एवं कृते मनुष्याणां भवेत्पापप्रणाशनम् । इहलोके सुखावाप्तिः परलोकेऽक्षयं सुखम् ॥

## ॥ अथ श्रीकृष्णपूजनम् ॥

शुभे दिने सपत्नीको यजमानः कृतनित्यकृत्यः शान्तिपाठादिकं पठित्वा सङ्कल्पं कुर्यात्—देशकालौ । सङ्कीर्त्य— सर्वकिल्बिषोपशमनार्थं श्रुतिस्मृतिपुराणोक्तसमस्तशुभफलप्राप्तिकामः श्रीलक्ष्मीनारायणप्रीतये अष्टादशपुराणान्तर्गतस्याष्टादशसहस्रपरिमितश्लोकात्मककस्य श्रीमद्भागवतमहापुराणस्य सप्ताहपुराणविधिना कथाश्रवणमहं करिष्ये । तदङ्गत्वेन स्वस्तिपुण्याहवाचनं, मातृकापूजनं, वसोर्धारापूजनम्, आयुष्यमन्त्रजपं, नान्दीश्राद्धं वरणं च करिष्ये । तत्रादौ निर्विघ्नतासिध्यर्थं गणेशाम्बिकयोः पूजनं करिष्ये—इति सङ्कल्प्य पूजनं ग्रहशान्त्यनुसारेण कुर्यात् । ततः व्यासस्य हस्तौ पादौ प्रक्षाल्य पञ्चोपचारैः पूजनं कृत्वा वरणसामग्रीं गृहीत्वा देशकालौ सङ्कीर्त्य—अमुकगोत्रममुकशर्माणं ब्राह्मणं श्रीमद्भागवतमहापुराणस्य सप्ताहपारायणकर्तृत्वेन एभिर्वरणद्रव्यैरहं वृणे । अथ न्यासः—ॐ केशवाय नमः—वामकरे १ ॐ नारायणाय न० दक्षिणकरे २ ॐ माधवाय न० वामपादे ३ ॐ गोविन्दाय न० दक्षिणपादे ४ ॐ विष्णवे न० वामजानौ ५ ॐ मधुसूदनाय न० दक्षिणजानौ ६ ॐ त्रिविक्रमाय न० वामकट्याम् ७ ॐ वामनाय न० दक्षिणकट्याम् ८ ॐ श्रीधराय न० नाभौ ९ ॐ हृषीकेशाय हृदयाय नमः १० ॐ पद्मनाभाय न० कण्ठे ११ ॐ अनिरुद्धाय न० मूर्ध्नि १२ अथ पञ्चाङ्गन्यासः— ॐ पुरुषोत्तमाय न० हृदयाय नमः १ ॐ अधोक्षजाय न० शिरसे स्वाहा २ ॐ नृसिंहाय न० शिखायै वषट् ३ ॐ अच्युताय न० कवचाय हुम् ४ ॐ जनार्दनाय न० अस्त्राय फट् ५ अथ ध्यानम्—शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।

## ॥ अथ गङ्गापूजनम् ॥

ॐ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ प्राणायामः । देशकालौ संकीर्त्य—मम सकुटुम्बस्य सपरिवारस्य सर्वपापक्षयपूर्वकसकलोपशनिवारणवाञ्छितमनोरथसिध्यर्थं मया सह दशपूर्वान् दशापरान् वंश्यान्नरकोद्धारणार्थं यथोपचारैः गङ्गापूजनं करिष्ये—इति सङ्कल्प्य ध्यानं कुर्यात्—चतुर्भुजां त्रिनयनां शुद्धस्फटिकसन्निभाम् । ध्यायेऽहं मकरारूढां शुद्धवस्त्रां शुचिस्मिताम् ॥ ध्यायामि । विष्णुपादाब्जसम्भूते विश्वनाथशिरस्थिते । आवाहयामि गङ्गे ! त्वां भक्ताऽभीष्टफलप्रदे ! ॥ आवाहयामि । मुक्तारत्नसुवर्णादिखचितं सुन्दरं शुभम् । सिंहासनं प्रदास्यामि गृहाण मकरासने । आसनं समर्पयामि । सिन्ध्वादिसरिदुद्भूत गन्धपुष्पसमन्वितम् । पाद्यं ददाम्यहं देवि ! प्रसीद परमेश्वरि ! ॥ पाद्यं स० । ब्रह्मकमण्डलुसम्भूते ! गङ्गे ! त्रिपथगामिनि ! गृहाणाऽर्घ्यं प्रदास्यामि जह्नुकन्ये नमोऽस्तु ते ॥ अर्घ्यं स० । सुवर्णकलशाऽऽनीतं नानागन्धसुवासितम् । आचम्यतां मया दत्तं गृहाणाऽमृतवर्षिणि ! ॥ आचमनीयं स० । पयो दधि घृतक्षौद्रं रम्भाफलसमन्वितम् । पञ्चामृतमिदं देवि ! स्वीकुरुष्व महेश्वरि ॥ पञ्चामृतं स० । नर्मदायमुनासिन्धुगोदावर्याऽऽहृतैर्जलैः । स्नापयामि शिवे । भक्त्या भागीरथि नमोऽस्तु ते ॥ स्नानं स० । वदूर्यपद्मरागादिखचितं मेखलान्वितम् । सुवर्णसूत्रसंयुक्तं क्षौमं दास्यामि गृह्यताम् ॥ वस्त्रं समर्पयामि । मलयाचलसम्भूतं कस्तूरीकुङ्कुमान्वितम् । कर्पूरमिश्रितं गन्धं गृहाण परमेश्वरि ! ॥ गन्धं स० । अक्षतान् शालिसम्भूतान् हरिद्राकुङ्कुमान्वितान् । पूजार्थं सङ्गृहाणेमामक्षय्यफलदायिनि ! ॥ अक्षतान् स० । वज्रवैदूर्यमाणिक्यपद्मरागादिनिर्मितम् । कङ्कणं करशोभार्थं कामितार्थं फलप्रदे ॥ आभरणं स० । केतकीतुलसीविल्वमल्लिकाकमलादिभिः । पुन्नागैरर्चयामि त्वां गृहाणाऽमरवन्दिते ॥ पुष्पं स० ।

### ❀ अथाङ्गपूजा ❀

ओं पर्वतनाशिन्यै नमः—पादौ पूजयामि । भक्तवत्सलायै नमः—गुल्फौ पूज० । जगद्धात्र्यै न०—जङ्घे पू० । जाह्नव्यै न०—जानुनी पू० । शैलसुतायै न०—ऊरू पू० । समुद्रगामिन्यै न०—कटिं पू० । मकरारूढायै न०—गुह्यं पूज० । आनन्दवर्धिन्यै न० जघनं पू० । गङ्गायै न० नाभिं पूज० । जगत्कुक्ष्यै न०—उदरं पू० । विशालवक्षायै न०—वक्षःस्थलं पू० । ह्रादिन्यै न० हृदयं पू० । सुस्तन्यै न०—स्तनौ पूज० । तरङ्गिण्यै न० पार्श्वौ पूज० । उन्नतकण्ठ्यै न० कण्ठं पू० । त्रैलोक्यसुन्दर्यै न०—स्कन्धौ पूज० । अमृतकलशहस्तायै न०—हस्तान् पूज० । लीलाशुकधारिण्यै न०—बाहू पूज० । विद्याप्रकाशिन्यै न० मुखं पू० । त्रैलोक्यवासिन्यै न०—ललाटं पू० । सुनासिकायै न०—नासिकां पू० । मकरकुण्डलधारिण्यै न० श्रोत्रे पू० । बिम्बोष्ठ्यै न०—ओष्ठौ पू० । अनाथरक्षिण्यै न०— अधरं पू० । चञ्चलगत्यै न०—जिह्वां पूज० । अलकनन्दायै न०—गण्डस्थलं पू० । तिलकधारिण्यै न०—भालं पू० । ज्ञानरूपिण्यै न०—चुबुकं पू० । अमृतबिम्बायै न०—अलकां पू० । भीमरथ्यै न०—शिरः पू० । भागीरथ्यै न०—सर्वाण्यङ्गानि पूजयामि ।

### ❀ अथ धूपादिपूजा ❀

चन्दनाऽगरुमुस्तादि घृतगुग्गुलसंयुतम् । दशाङ्गद्रव्यसंयुक्तं धूपोऽयं प्रति गृह्यताम् । धूपं स० । साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया । गृहाण मङ्गलं दीपं त्रैलोक्यतिमिरापहम् ॥ दीपं स० । शल्यन्नं व्यञ्जनैर्युक्तं सूपाऽपूपघृतान्वितम् । क्षीराऽन्नं लड्डुकोपेतं भुज्यतामसृताशिनी ॥ नैवेद्यं स० । पूगीफलसमायुक्तं नागवल्लीदलैर्युतम् । कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ताम्बूलं स० । तेजः पुञ्जस्वरूपे ते तेजसा भासितं जगत् । नीराजयामि गङ्गे त्वां भक्ताऽभीष्टफलप्रदे । नीराजनं स० । गङ्गे ! त्रिपथगे ! दिव्ये ! जाह्नवि ! त्रिदिवस्थिते ! ।

स्वर्गीय—महामहोपाध्याय अस्मत्पितृचरण पण्डित विद्याधरशास्त्रि गौड स्मारक—

भारतीय-कर्मकाण्ड-मण्डल की ६६ पुष्पलता

( दशमस्कन्ध पूर्वार्ध )

# श्रीमद्भागवत भाषाटीका

परिवर्तित-परिवर्धित—श्रीगङ्गापूजन—कृष्णपूजन—पुराणपूजन—व्यासपूजन—नानासङ्कल्प—अध्यायसार—आदि समन्वित—

[ 'सरस्वती' भाषाटीका दृष्टान्त और 'प्रकाश' टिप्पण से अलंकृत ]

संपादक—उत्तरप्रदेशीय-सरकार—द्वारा—सम्मानित—विद्वान् याज्ञिकसम्राट् आचार्य श्रीदौलतरामगौड

वेदाचार्य, मीमांसाशास्त्री, कर्मकाण्डशास्त्री, पौरोहित्यरत्न

( नवम—स्कन्ध )

इति

# श्रीमद्भागवत भाषा टीका

मुद्रक—गोपालप्रेस, लाखिपावैची बनारस ।

पायर्सि चातकः ॥ १२ ॥ हँसः स्यात् सारमादत्ते यः श्रोता विविधाच्छ्रुतात् । दुग्धेनैक्यं गतात्तोयाद् यथा हंसोऽमलं पयः ॥१३॥ शुकः सुष्ठु मितं वक्ति व्यासं श्रोतुंश्च हर्षयन् । सुपाठितः शुको यद्वच्छिक्षकं पार्श्वगानपि ॥१४॥ शब्दं नानिमिषो जातु करोत्यास्वादयन् रसम् । श्रोता स्निग्धो भवेन्मीनो मीनः क्षीरनिधौ यथा ॥१५॥ यस्तुदन् रसिकाञ्छ्रोतॄन् विरौत्यज्ञो वृको हि सः । वेणुस्वनरसासक्तान् वृकोऽरण्ये मृगान् यथा ॥१६॥ भूरुण्डः शिक्षयेदन्याञ्छ्रुत्वा न स्वयमाचरेत् । यथा हिमवतः शृङ्गे भूरुण्डाख्यो विहङ्गमः ॥१७॥ सर्वं श्रुतमुपादत्ते सारासारान्धधीर्वृषः । स्वादुद्राक्षां खलिं चापि निर्विशेषं यथा वृषः ॥ १८ ॥ स उष्ट्रो मधुरं मुञ्चन् विपरीते रमेत यः । यथा निम्बं चरत्युष्ट्रो हित्वाम्रमपि तद्युतम् ॥ १९ ॥ अन्येऽपि बहवो भेदा द्वयोर्भृङ्गखरादयः । विज्ञेयास्तत्तदाचारैस्तत्तत्प्रकृतिसम्भवैः ॥ २० ॥ यः स्थित्वाभिमुखं प्रणम्य विधिवत्त्यक्तान्यवादो हरेर्लीलाः श्रोतुमभीप्सतेऽतिनिपुणो नम्रोऽथ क्लृप्ताञ्जलिः । शिष्यो विश्वसतोऽनुचिन्तनपरः प्रश्नेऽनुरक्तः शुचिर्नित्यं कृष्णजनप्रियो निगदितः श्रोता स वै वक्तृभिः ॥२१॥ भगवन्मतिरनपेक्षः सुहृदो दीनेषु सानुकम्पो यः । बहुधा बोधनचतुरो वक्ता सम्मानितो मुनिभिः ॥ २२ ॥ अथ भारतभूस्थाने श्रीभागवतसेवने । विधिं शृणुत भो विप्रा येन स्यात् सुखसन्ततिः ॥२३॥ राजसं सात्त्विकं चापि तामसं निर्गुणं तथा । चतुर्विधं तु विज्ञेयं श्रीभागवतसेवनम् ॥२४॥ सप्ताहं यज्ञवद् यत्तु सश्रमं सत्वरं मुदा । सेवितं राजसं तत्तु बहुपूजादिशोभनम् ॥२५॥ मासेन ऋतुना वापि श्रवणं स्वादसंयुतम् । सात्त्विकं यदनायासं समस्तानन्दवर्द्धनम् ॥२६॥ तामसं यत्तु वर्षेण सालसं श्रद्धया युतम् । विस्मृतिस्मृतिसंयुक्तं सेवनं तच्च सौख्यदम् ॥ २७ ॥ वर्षमासदिनानां तु विमुच्य नियमाग्रहम् । सर्वदा प्रेमभक्त्यैव सेवनं निर्गुणं मतम् ॥ २८ ॥ परीक्षितेऽपि संवादे निर्गुणं तत् प्रकीर्तितम् । तत्र सप्तदिनाख्यानं तदायुर्दिनसंख्यया ॥२९॥ अन्यत्र त्रिगुणं चापि निर्गुणं च यथेच्छया । यथा कथञ्चित् कर्त्तव्यं सेवनं भगवच्छ्रुतेः ॥३०॥ ये श्रीकृष्णविहारैकभजनास्वादलोलुपाः । मुक्तावपि निराकाङ्क्षास्तेषां भागवतं धनम् ॥३१॥ येऽपि संसारसन्तापनिर्विण्णा मोक्षकाङ्क्षिणः । तेषां भवौषधं चैतत्कलौ सेव्यं प्रयत्नतः ॥३२॥ ये चापि विषयारामाः सांसारिकसुखस्पृहाः । तेषां तु कर्ममार्गेण या सिद्धिः साधुना कलौ ॥३३॥ सामर्थ्यधनविज्ञानाभावादत्यन्तदुर्लभा । तस्मात्तैरपि संसेव्या श्रीमद्भागवती कथा ॥३४॥ धनं पुत्रांस्तथा दारान् वाहनादि यशो गृहान् । असापत्न्यं च राज्यं च दद्याद् भागवती कथा ॥३५॥ इहलोके वरान् भुक्त्वा भोगान् वै मनसेप्सितान् । श्रीभागवतसङ्गेन यात्यन्ते श्रीहरेः पदम् ॥३६॥ यत्र भागवती वार्त्ता ये च तच्छ्रवणे रताः । तेषां संसेवनं कुर्याद् देहेन च धनेन च ॥ ३७ ॥ तदनुग्रहतोऽस्यापि श्रीभागवतसेवनम् । श्रीकृष्णव्यतिरिक्तं यत्तत् सर्वं धनसंज्ञितम् ॥३८॥ कृष्णार्थीति धनार्थीति श्रोता वक्ता द्विधा मतः । यथा वक्ता तथा श्रोता तत्र सौख्यं विवर्द्धते ॥३९॥ उभयोर्वैपरीत्ये तु रसाभासे फलच्युतिः । किन्तु कृष्णार्थिनां सिद्धिर्विलम्बेनापि जायते ॥४०॥ धनार्थिनस्तु संसिद्धिर्विधिसम्पूर्णतावशात् । कृष्णार्थिनोऽगुणस्यापि प्रेमैव विधिरुत्तमः ॥ ४१ ॥ आसमाप्ति सकामेन कर्त्तव्यो हि विधिः स्वयम् । स्नातो नित्यक्रियं कृत्वा प्राश्य पादोदकं हरेः ॥४२॥ पुस्तकं च गुरुं चैव पूजयित्वोपचारतः । ब्रूयाद् वा शृणुयाद् वापि श्रीमद्भागवतं मुदा ॥४३॥ पयसा वा हविष्येण मौनं भोजनमाचरेत् । ब्रह्मचर्यमधःसुप्तिं क्रोधलोभादिवर्जनम् ॥४४॥ कथान्ते कीर्त्तनं नित्यं समाप्तौ जागरं चरेत् । ब्राह्मणान् भोजयित्वा तु दक्षिणाभिः प्रतोषयेत् ॥ ४५ ॥ गुरवे वस्त्रभूषादि दत्त्वा गां च समर्पयेत् । एवं कृते विधाने तु लभते वाञ्छितं फलम् ॥४६॥ दारागारसुतान् राज्यं धनादि च यदीप्सितम् । परन्तु शोभते नात्र सकामत्वं विडम्बनम् ॥४७॥ कृष्णप्राप्तिकरं शश्वत् प्रेमानन्दफलप्रदम् । श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ॥४८॥ इति श्रीस्कान्दे महापुराणे द्वितीये वैष्णवखण्डे श्रीमद्भागवतमाहात्म्ये चतुर्थोऽध्यायः । इति ।

तदेषामपि कार्यार्थे श्रीमद्भागवतं त्वहम् । प्रवक्ष्यामि सहायोऽत्र त्वयैवानुष्ठितो भवेत् ॥५१॥ सूत उवाच-विष्णुरातस्तु श्रुत्वा तदुद्धवं प्रणतोऽब्रवीत् । परीक्षिदुवाच-हरिदास त्वया कार्यं श्रीभागवतकीर्तनम् ॥ ५२ ॥ आज्ञाप्योऽहं यथा कार्यः सहायोऽत्र मया तथा । सूत उवाच—श्रुत्वैतदुद्धवो वाक्यमुवाच प्रीतमानसः ॥५३॥ उद्धव उवाच-श्रीकृष्णेन परित्यक्ते भूतले बलवान् कलिः । करिष्यति परं विघ्नं सत्कार्ये समुपस्थिते ॥ ५४ ॥ तस्माद् दिग्विजयं याहि कलिनिग्रहमाचर । अहं तु मासमात्रेण वैष्णवीं रीतिमास्थितः ॥५५॥ श्रीमद्भागवतास्वादं प्रचार्य त्वन्महागत: । एतान् सम्प्रापयिष्यामि नित्यधाम्नि मधुद्विषः ॥ ५६ ॥ सूत उवाच—श्रुत्वैवं तद्वचो राजा मुदितश्चिन्तयाऽऽतुरः । तदा विज्ञापयामास स्वाभिप्रायं तमुद्धवम् ॥५७॥ परीक्षिदुवाच-कलिं तु निग्रहीष्यामि तात ते वचसि स्थितः । श्रीभागवतसम्प्राप्तिः कथं मम भविष्यति ॥५८॥ अहं तु समनुग्राह्यस्तव पादाब्जे श्रितः । सूत उवाच-श्रुत्वेतद् वचनं भूयोऽप्युद्धवस्तमुवाच ह ॥ ५९ ॥ उद्धव उवाच-राजंश्चिन्ता तु ते कापि नैव कार्या कथञ्चन । तवैव भगवच्छास्त्रे यतो मुख्याधिकारिता ॥६०॥ एतावत्कालपर्यन्तं प्रायो भागवतश्रुतेः । वार्तामपि न जानन्ति मनुष्याः कर्मतत्पराः ॥६१॥ त्वत्प्रसादेन बहवो मनुष्या भारताजिरे । श्रीमद्भागवतप्राप्तौ सुखं प्राप्स्यन्ति शाश्वतम् ॥६२॥ नन्दनन्दनरूपस्तु श्रीशुको भगवानृषिः । श्रीमद्भागवतं तुभ्यं श्रावयिष्यत्यसंशयम् ॥ ६३ ॥ तेन प्राप्स्यसि राजंस्त्वं नित्यं धाम व्रजेशितुः । श्रीभागवतसञ्चारस्ततो भुवि भविष्यति ॥६४॥ तस्मात्त्वं गच्छ राजेन्द्र कलिनिग्रहमाचर । सूत उवाच- इत्युक्तस्तं परिक्रम्य गतो राजा दिशां जये ॥ ६५ ॥ वज्रस्तु निजराज्येशं प्रतिबाहुं विधाय च । तत्रैव मातृभिः साकं तस्थौ भागवताशया ॥ ६६ ॥ अथ वृन्दावने मासं गोवर्द्धनसमीपतः । श्रीमद्भागवतास्वादस्तूद्धवेन प्रवर्तितः ॥ ६७ ॥ तस्मिन्नास्वाद्यमाने तु सच्चिदानन्दरूपिणी । प्रचकाशे हरेर्लीला सर्वतः कृष्ण एव च ॥ ६८ ॥ आत्मानं च तदन्तःस्थं सर्वेऽपि ददृशुस्तदा । वज्रस्तु दक्षिणे दृष्ट्वा कृष्णपादसरोरुहे ॥६९॥ स्वात्मानं कृष्णवैधुर्यान्मुक्तस्तद्भुव्यशोभत । ताश्च तन्मातरः कृष्णे रासरात्रिप्रकाशिनि ॥७०॥ चन्द्रे कलाप्रभारूपमात्मानं वीक्ष्य विस्मिताः । स्वप्रेष्ठविरहव्याधिविमुक्ताः स्वपदं ययुः ॥ ७१ ॥ येऽन्ये च तत्र ते सर्वे नित्यलीलान्तरं गताः । व्यावहारिकलोकेभ्यः सद्योऽदर्शनमागताः ॥ ७२ ॥ गोवर्द्धननिकुञ्जेषु गोषु वृन्दावनादिषु । नित्यं कृष्णेन मोदन्ते दृश्यन्ते प्रेमतत्परैः ॥ ७३ ॥ सूत उवाच-य एतां भगवत्प्राप्तिं शृणुयाच्चापि कीर्तयेत् । तस्य वै भगवत्प्राप्तिर्दुःखहानिश्च जायते ॥ ७४ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्त्र्यां द्वितीये वैष्णवखण्डे परीक्षिदुद्धवसंवादे श्रीमद्भागवतमाहात्म्ये तृतीयोऽध्यायः ।

ऋषय ऊचुः-साधु सूत चिरं जीव चिरमेवं प्रशाधि नः । श्रीभागवतमाहात्म्यमपूर्वं त्वन्मुखाच्छ्रुतम् ॥ १ ॥ तत्स्वरूपं प्रमाणं च विधिं च श्रवणे वद । तद्वक्तुर्लक्षणं सूत श्रोतुश्चापि वदाधुना ॥ २ ॥ सूत उवाच-श्रीमद्भागवतस्याथ श्रीमद्भगवतः सदा । स्वरूपमेकमेवास्ति सच्चिदानन्दलक्षणम् ॥ ३ ॥ श्रीकृष्णासक्तभक्तानां तन्माधुर्यप्रकाशकम् । समुज्जृम्भति यद्वाक्यं विद्धि भागवतं हि तत् ॥४॥ ज्ञानविज्ञानभक्त्यङ्गचतुष्टयपरं वचः । मायामर्दनदक्षं च विद्धि भागवतं च तत् ॥ ५ ॥ प्रमाणं तस्य को वेद ह्यनन्तस्याक्षरात्मनः । ब्रह्मणे हरिणा तद्दिक्चतुःश्लोक्या प्रदर्शिता ॥६॥ तदानन्त्यावगाहेन स्वेप्सितावहनक्षमाः । त एव सन्ति भो विप्रा ब्रह्मविष्णुशिवादयः ॥७॥ मितबुद्ध्यादिवृत्तीनां मनुष्याणां हिताय च । परीक्षिच्छुकसंवादो योऽसौ व्यासेन कीर्तितः ॥८॥ ग्रन्थोऽष्टादशसाहस्रो योऽसौ भागवताभिधः । कलिग्राहगृहीतानां स एव परमाश्रयः ॥९॥ श्रोतारोऽथ निरूप्यन्ते श्रीमद्विष्णुकथाश्रयाः । प्रवरा अवराश्चेति श्रोतारो द्विविधा मताः ॥ १० ॥ प्रवराश्चातको हंसः शुको मीनादयस्तथा । अवरा वृकभूरुण्डवृषोष्ट्राद्याः प्रकीर्तिताः ॥११॥ अखिलोपेक्षया यस्तु कृष्णशास्त्रश्रुतौ व्रती । स चातको यथाम्भोदमुक्ते

चापि श्रीकृष्णस्तत्र निश्चितम् ॥ १२ ॥ श्रीमद्भागवतं यत्र श्लोकं श्लोकार्द्धमेव च । तत्रापि भगवान् कृष्णो बल्लवीभिर्विराजते ॥१३॥ भारते मानवं जन्म प्राप्य भागवतं न यैः । श्रुतं पाप-
पराधीनैरात्मघातस्तु तैः कृतः ॥ १४ ॥ श्रीमद्भागवतं शास्त्रं नित्यं यैः परिसेवितम् । पितुर्मातुश्च भार्यायाः कुलपङ्क्तिः सुतारिता ॥ १५ ॥ विद्याप्रकाशो विप्राणां राज्ञां शत्रुजयो विशाम् ।
धनं स्वास्थ्यं च शूद्राणां श्रीमद्भागवताद् भवेत् ॥ १६ ॥ योषितामपरेषां च सर्ववाञ्छितपूरणम् । अतो भागवतं नित्यं को न सेवेत भाग्यवान् ॥ १७ ॥ अनेकजन्मसंसिद्धः श्रीमद्भागवतं
लभेत् । प्रकाशो भगवद्भक्तेरुद्भवस्तत्र जायते ॥ १८ ॥ सांख्यायनप्रसादात्तं श्रीमद्भागवतं पुरा । बृहस्पतिर्दत्तवान् मे तेनाहं कृष्णवल्लभः ॥ १९ ॥ आख्यायिकां च तेनोक्तां विष्णुरात
निबोध ताम् । ज्ञायते सम्प्रदायोऽपि यत्र भागवतश्रुतेः ॥ २० ॥ बृहस्पतिरुवाच–ईक्षाञ्चक्रे यदा कृष्णो मायापुरुषरूपधृक् । ब्रह्मा विष्णुः शिवश्चापि रजःसत्त्वतमोगुणैः ॥ २१ ॥ पुरुषास्त्रय
उत्तस्थुरधिकारांस्तदादिशत् । उत्पत्तौ पालने चैव संहारे प्रक्रमेण तान् ॥ २२ ॥ ब्रह्मा तु नाभिकमलादुत्पन्नस्तं व्यजिज्ञपत् । ब्रह्मोवाच–नारायणादिपुरुष परमात्मन् नमोऽस्तु ते ॥ २३ ॥
त्वया सर्गे नियुक्तोऽस्मि पापीयान् मां रजोगुणः । त्वत्स्मृतौ नैव बाधेत तथैव कृपया प्रभो ॥२४॥ बृहस्पतिरुवाच–यदा तु भगवांस्तस्मै श्रीमद्भागवतं पुरा । उपदिश्याब्रवीद् ब्रह्मन् सेवस्वै-
नत् स्वसिद्धये ॥२५॥ ब्रह्मा तु परमप्रीतस्तेन कृष्णाप्तयेऽनिशम् । सप्तावरणभङ्गाय सप्ताहं समवर्तयत् ॥२६॥ श्रीभागवतसप्ताहसेवनाप्तमनोरथः । सृष्टिं वितनुते नित्यं ससप्ताहः पुनः पुनः ॥२७॥
विष्णुरप्यर्थयामास पुमांसं स्वार्थसिद्धये । प्रजानां पालने पुंसा यदनेनापि कल्पितः ॥ २८ ॥ विष्णुरुवाच–प्रजानां पालनं देव करिष्यामि यथोचितम् । प्रवृत्त्या च कर्मज्ञानप्रयो-
जनात् ॥ २९ ॥ यदा यदैव कालेन धर्मग्लानिर्भविष्यति । धर्मं संस्थापयिष्यामि ह्यवतारैस्तदा तदा ॥३०॥ भोगार्थिभ्यस्तु यज्ञादिफलं दास्यामि निश्चितम् । मोक्षार्थिभ्यो विरक्तेभ्यो मुक्तिं
पञ्चविधां तथा ॥ ३१ ॥ येऽपि मोक्षं न वाञ्छन्ति तान् कथं पालयाम्यहम् । आत्मानं च श्रियं चापि पालयामि कथं वद ॥ ३२ ॥ तस्मा अपि पुमानाद्यः श्रीभागवतमादिशत् । उवाच च
पठस्वैनत्तव सर्वार्थसिद्धये ॥ ३३ ॥ ततो विष्णुः प्रसन्नात्मा परमार्थकपालने । समर्थोऽभूच्छ्रिया मासि मासि भागवतं स्मरन् ॥ ३४ ॥ यदा विष्णुः स्वयं वक्ता लक्ष्मीश्च श्रवणे रता । तदा
भागवतश्रावो मासनैव पुनः पुनः ॥ ३५ ॥ यदा लक्ष्मीः स्वयं वक्त्री विष्णुश्च श्रवणे रतः । मासद्वयं रसास्वादस्तदातीव सुशोभते ॥ ३६ ॥ अधिकारे स्थितो विष्णुर्लक्ष्मीर्निश्चिन्तमानसा ।
तेन भागवतास्वादस्तस्या भूरि प्रकाशते ॥ ३७ ॥ अथ रुद्रोऽपि तं देवं संहाराधिकृतः पुरा । पुमांसं प्रार्थयामास स्वसामर्थ्यविवृद्धये ॥ ३८ ॥ रुद्र उवाच–नित्ये नैमित्तिके चैव संहारे प्राकृते
तथा । शक्तयो मम विद्यन्ते देवदेव मम प्रभो ॥ ३९ ॥ आत्यन्तिके तु संहारे मम शक्तिर्न विद्यते । महद् दुःखं ममैतत्तु तेन त्वां प्रार्थयाम्यहम् ॥ ४० ॥ बृहस्पतिरुवाच–श्रीमद्भागवतं तस्मा
अपि नारायणो ददौ । स तु संसेवनादस्य जिग्ये चापि तमोगुणम् ॥ ४१ ॥ कथा भागवती तेन सेविता वर्षमात्रतः । लये त्वात्यन्तिके तेनावाप शक्तिं सदाशिवः ॥ ४२ ॥ उद्धव उवाच–
श्रीभागवतमाहात्म्य इमामाख्यायिकां गुरोः । श्रुत्वा भागवतं लब्ध्वा मुमुदेऽहं प्रणम्य तम् ॥४३॥ ततस्तु वैष्णवीं रीतिं गृहीत्वा मासमात्रतः । श्रीमद्भागवतास्वादो मया सम्यङ्निषेवितः ॥४४॥
तावतैव बभूवाहं कृष्णस्य दयितः सखा । कृष्णेनाथ नियुक्तोऽहं व्रजे स्वप्रेयसीगणे ॥ ४५ ॥ विरहार्त्तासु गोपीषु स्वयं नित्यविहारिणा । श्रीभागवतसन्देशो मन्मुखेन प्रयोजितः ॥ ४६ ॥
तं यथामति लब्ध्वा ता आसन् विरहवर्जिताः । नाज्ञासिषं रहस्यं तच्चमत्कारस्तु लोकितः ॥४७॥ स्ववासं प्रार्थ्य कृष्णं च ब्रह्माद्येषु गतेषु मे । श्रीमद्भागवते कृष्णस्तद्रहस्यं स्वयं ददौ ॥४८॥
पुरतोऽश्वत्थमूलस्य चकार मयि तद् दृढम् । तेनात्र व्रजवल्लीषु वसामि बदरीं गतः ॥४९॥ तस्मान्नारदकुण्डेऽत्र तिष्ठामि स्वेच्छया सदा । कृष्णप्रकाशो भक्तानां श्रीमद्भागवताद् भवेत् ॥५०॥

॥ ११ ॥ तस्या एवांशविस्ताराः सर्वाः श्रीकृष्णनायिकाः । नित्यसम्भोग एवास्ति तस्याः साम्मुख्ययोगतः ॥ १२ ॥ स एव सा स सैवास्ति वंशी तत्प्रेमरूपिका । श्रीकृष्णनखचन्द्रालिसङ्गा-
चन्द्रावली स्मृता ॥ १३ ॥ रूपान्तरमगृह्णाना तयोः सेवातिलालसा । रुक्मिण्यादिसमावेशो मयात्रैव विलोकितः ॥ १४ ॥ युष्माकमपि कृष्णेन विरहो नैव सर्वतः । किन्तु एवं न जानीथ
तस्माद् व्याकुलतामिताः ॥ १५ ॥ एवमेवात्र गोपीनामक्रूरावसरे पुरा । विरहाभास एवासीदुद्धवेन समाहितः ॥ १६ ॥ तेनैव भवतीनां चेद् भवेदत्र समागमः । तर्हि नित्यं स्वकान्तेन विहार
मपि लप्स्यथ ॥ १७ ॥ सूत उवाच—एवमुक्तास्तु ताः पत्न्यः प्रसन्नां पुनरब्रुवन् । उद्धवालोकनेनात्मप्रेष्ठसङ्गमलालसाः ॥ १८ ॥ श्रीकृष्णपत्न्य ऊचुः—धन्यासि कान्तेन यस्या नैवास्ति
विच्युतिः । यतस्ते स्वार्थसंसिद्धिस्तस्या दास्यो बभूविम ॥ १९ ॥ परन्तूद्धवलाभे स्यादस्मत्सर्वार्थसाधनम् । तथा वदस्व कालिन्दि तल्लाभोऽपि यथा भवेत् ॥२०॥ सूत उवाच—एवमुक्ता तु
कालिन्दी प्रत्युवाचाथ तास्तथा । स्मरन्ती कृष्णचन्द्रस्य कलाः षोडशरूपिणीः ॥ २१ ॥ साधनभूमिर्बदरी व्रजता कृष्णेन मन्त्रिणे प्रोक्ता । तत्रास्ते स तु साक्षात्तद्वयुनं ग्राहयँल्लोकान् ॥२२॥
फलभूमिर्व्रजभूमिर्दत्ता तस्मै पुरैव सरहस्यम् । फलमिह तिरोहितं सत्तदिहेदानीं स उद्धवोऽलक्ष्यः ॥ २३ ॥ गोवर्द्धनगिरिनिकटे सखीस्थले तद्रजःकामः । तत्रत्याङ्कुरवल्लीरूपेणास्ते स उद्धवो
नूनम् ॥ २४ ॥ आत्मोत्सवरूपत्वं हरिणा तस्मै समर्पितं नियतम् । तस्मात्तत्र स्थित्वा कुसुमसरः परिसरे सवज्राभिः ॥ २५ ॥ वीणावेणुमृदङ्गैः कीर्तनकाव्यादिसरससङ्गीतैः । उत्सव आरब्धव्यो
हरिरतलोकान् समानाय्य ॥ २६ ॥ तत्रोद्धवावलोको भविता नियतं महोत्सवे वितते । यौष्माकीणामभिमतसिद्धिं सविता स एव सवितानाम् ॥ २७ ॥ सूत उवाच—इति श्रुत्वा प्रसन्नास्ताः
कालिन्दीमभिवन्द्य तत् । कथयामासुरागत्य व्रजं प्रति परीक्षितम् ॥ २८ ॥ विष्णुरातस्तु तच्छ्रुत्वा प्रसन्नस्तद्युतस्तदा । तत्रैवागत्य तत् सर्वं कारयामास सत्वरम् ॥ २९ ॥ गोवर्द्धनाददूरेण
वृन्दारण्ये सखीस्थले । प्रवृत्तः कुसुमाम्भोधौ कृष्णसङ्कीर्तनोत्सवः ॥ ३० ॥ वृषभानुसुताकान्तविहारे कीर्तनश्रिया । साक्षादिव समावृत्ते सर्वेऽनन्यदृशोऽभवन् ॥ ३१ ॥ ततः पश्यत्सु सर्वेषु
तृणगुल्मलताचयात् । आजगामोद्धवः स्रग्वी श्यामः पीताम्बरावृतः ॥३२॥ गुञ्जामालाधरो गायन् बल्लवीवल्लभं मुहुः । तदागमनतो रेजे भृशं सङ्कीर्तनोत्सवः ॥ ३३ ॥ चन्द्रिकागमतो यद्वत्
स्फटिकाट्टालभूमणिः । अथ सर्वे सुखाम्भोधौ मग्नाः सर्वविस्मृतः ॥ ३४ ॥ क्षणेनागतविज्ञाना दृष्ट्वा श्रीकृष्णरूपिणम् । उद्धवं पूजयाञ्चक्रुः प्रतिलब्धमनोरथाः ॥ ३५ ॥ इति श्रीस्कान्दे
महापुराण एकाशीतिसाहस्र्यो संहितायां द्वितीये वैष्णवखण्डे श्रीमद्भागवतमाहात्म्ये गोवर्द्धनपर्वतसमीपे परीक्षिदादीनामुद्धवदर्शनवर्णनं नाम द्वितीयोऽध्यायः ।

सूत उवाच—अथोद्धवस्तु तान् दृष्ट्वा कृष्णकीर्तनतत्परान् । सत्कृत्याथ परिष्वज्य परीक्षितमुवाच ह ॥१॥ उद्धव उवाच—धन्योऽसि राजन् कृष्णैकभक्त्या पूर्णोऽसि नित्यदा । यत्त्वं निमग्न-
चित्तोऽसि कृष्णसङ्कीर्तनोत्सवे ॥ २ ॥ कृष्णपत्नीषु वज्रे च दिष्ट्या प्रीतिः प्रवर्तिता । तवोचितमिदं तात कृष्णदत्ताङ्गवैभव ॥ ३ ॥ द्वारकास्थेषु सर्वेषु धन्या एते न संशयः । येषां व्रजनिवा-
साय पार्थमादिष्टवान् प्रभुः ॥ ४ ॥ श्रीकृष्णस्य मनश्चन्द्रो राधास्यप्रभयान्वितः । तद्विहारवनं गोभिर्मण्डयन् रोचते सदा ॥ ५ ॥ कृष्णचन्द्रः सदा पूर्णस्तस्य षोडश याः कलाः । चित्सहस्रप्रभा-
भिन्ना अत्रास्ते तत्स्वरूपता ॥ ६ ॥ एवं वज्रस्तु राजेन्द्र प्रपन्नभयभञ्जकः । श्रीकृष्णदक्षिणे पादे स्थानमेतस्य वर्तते ॥ ७ ॥ अवतारेऽत्र कृष्णेन योगमायातिभाविताः । तद्बलेनात्मविस्मृत्या
सीदन्त्येते न संशयः ॥ ८ ॥ ऋते कृष्णप्रकाशं तु स्वात्मबोधो न कस्यचित् । तत्प्रकाशस्तु जीवानां मायया पिहितः सदा ॥ ९ ॥ अष्टाविंशे द्वापरान्ते स्वयमेव यदा हरिः । उत्सारयेन्निजां
मायां तत्प्रकाशो भवेत्तदा ॥ १० ॥ स तु कालो व्यतिक्रान्तस्तेनेदमपरं शृणु । अन्यदा तत्प्रकाशस्तु श्रीमद्भागवताद् भवेत् ॥ ११ ॥ श्रीमद्भागवतं शास्त्रं यत्र भागवतैर्यदा । कीर्त्यते श्रूयते

॥५५॥

कत्या व्यापनाद् व्रज उच्यते ॥ १९ ॥ गुणातीतं परं ब्रह्म व्यापकं व्रज उच्यते । सदानन्दं परं ज्योतिर्मुक्तानां पदमव्ययम् ॥ २० ॥ तस्मिन् नन्दात्मजः कृष्णः सदानन्दाङ्गविग्रहः । आत्मारामश्चाप्तकामः प्रेमाक्तैरनुभूयते ॥ २१ ॥ आत्मा तु राधिका तस्य तयैव रमणादसौ । आत्मारामतया प्राज्ञैः प्रोच्यते गूढवेदिभिः ॥२२॥ कामास्तु वाञ्छितास्तस्य गावो गोपाश्च गोपिकाः। नित्याः सर्वे विहाराद्या आप्तकामस्ततस्त्वयम् ॥२३॥ रहस्यं त्विदमेतस्य प्रकृतेः परमुच्यते । प्रकृत्या खेलतस्तस्य लीलान्यैरनुभूयते ॥ २४ ॥ सर्गस्थित्यप्यया तत्र रजःसत्त्वतमोगुणैः । लीलैवं द्विविधा तस्य वास्तवी व्यावहारिकी ॥ २५ ॥ वास्तवी तत्स्वसंवेद्या जीवानां व्यावहारिकी । आद्यां विना द्वितीया न द्वितीया नाद्यगा क्वचित् ॥ २६ ॥ युवयोर्गोचरेयं तु तल्लीला व्यावहारिकी । यत्र भूरादयो लोका भुवि माथुरमण्डलम् ॥ २७ ॥ अत्रैव व्रजभूमिः सा यत्र तत्त्वं सुगोपितम् । भासते प्रेमपूर्णानां कदाचिदपि सर्वतः ॥ २८ ॥ कदाचिद् द्वापरस्यान्ते रहोलीलाधिकारिणः । समवेता यदात्र स्युर्यथेदानीं तदा हरिः ॥ २९ ॥ स्वैः सहावतरेत् स्वेषु समावेशार्थमीप्सिताः । तदा देवादयोऽप्यन्येऽवतरन्ति समन्ततः ॥ ३० ॥ सर्वेषां वाञ्छितं कृत्वा हरिरन्तर्हितोऽभवत् । तेनात्र त्रिविधा लोकाः स्थिताः पूर्वं न संशयः ॥ ३१ ॥ नित्यास्तल्लिप्सवश्चैव देवाद्याश्चेति भेदतः । देवाद्यास्तेषु कृष्णेन द्वारिकां प्रापिताः पुरा ॥३२॥ पुनर्मौशल-मार्गेण स्वाधिकारेषु चापिताः । तल्लिप्सूंश्च सदा कृष्णः प्रेमानन्दैकरूपिणः ॥३३॥ विधाय स्वीयनित्येषु समावेशितवांस्तदा । नित्याः सर्वेऽप्ययोग्येषु दर्शनाभावतां गताः ॥ ३४ ॥ व्यावहारिकलीलास्थास्तत्र यन्नाधिकारिणः । पश्यन्त्यत्रागतास्तस्मान्निर्जनत्वं समन्ततः ॥३५॥ तस्माच्चिन्ता न ते कार्या वज्रनाभ मदाज्ञया । वासयात्र बहून् ग्रामान् संसिद्धिस्ते भविष्यति ॥३६॥ कृष्णलीलानुसारेण कृत्वा नामानि सर्वतः । त्वया वासयता ग्रामान् संसेव्या भूरियं परा ॥ ३७ ॥ गोवर्द्धने दीर्घपुरे मथुरायां महावने । नन्दिग्रामे बृहत्सानौ कार्या राजस्थितिस्त्वया ॥३८॥ नद्यद्रिद्रोणिकुण्डादिकुञ्जान् संसेवतस्तव । राज्ये प्रजाः सुसम्पन्नास्त्वं च प्रीतो भविष्यसि ॥ ३९ ॥ सच्चिदानन्दभूरेषा त्वया सेव्या प्रयत्नतः । तव कृष्णस्थलान्यत्र स्फुरन्तु मदनुग्रहात् ॥४०॥ वज्र संसेवनादस्या उद्धवस्त्वां मिलिष्यति । ततो रहस्यमेतस्मात् प्राप्स्यसि त्वं समातृकः ॥ ४१ ॥ एवमुक्त्वा तु शाण्डिल्यो गतः कृष्णमनुस्मरन् । विष्णुरातोऽथ वज्रश्च परां प्रीतिमवापतुः ॥ ४२ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीमद्भागवतमाहात्म्ये शाण्डिल्योपदिष्टव्रजभूमिमाहात्म्यवर्णनं नाम प्रथमोऽध्यायः ।

ऋषय ऊचुः—शाण्डिल्ये तौ समादिश्य परावृत्ते स्वमाश्रमम् । किं कथं चक्रतुस्तौ तु राजानौ सूत तद् वद ॥१॥ सूत उवाच—ततस्तु विष्णुरातेन श्रेणीमुख्याः सहस्रशः । इन्द्रप्रस्थात् समानाय्य मथुरास्थानमापिताः ॥ २ ॥ माथुरान् ब्राह्मणांस्तत्र वानरांश्च पुरातनान् । विज्ञाय माननीयत्वं तेषु स्थापितवान् स्वराट् ॥३॥ वज्रस्तु तत्सहायेन शाण्डिल्यस्याप्यनुग्रहात् । गोविन्दगोपगोपीनां लीलास्थानान्यनुक्रमात् ॥ ४ ॥ विज्ञायाभिधयाऽऽस्थाप्य ग्रामानावासयद् बहून् । कुण्डकूपादिपूर्तेन शिवादिस्थापनेन च ॥ ५ ॥ गोविन्दहरिदेवादिस्वरूपारोपणेन च । कृष्णैकभक्तिं स्वे राज्ये ततान च मुमोद ह ॥ ६ ॥ प्रजास्तु मुदितास्तस्य कृष्णकीर्तनतत्पराः । परमानन्दसम्पन्ना राज्यं तस्यैव तुष्टुवुः ॥७॥ एकदा कृष्णपत्न्यस्तु श्रीकृष्णविरहातुराः । कालिन्दीं मुदितां वीक्ष्य पप्रच्छुर्गतमत्सराः ॥ ८ ॥ श्रीकृष्णपत्न्य ऊचुः—यथा वयं कृष्णपत्न्यस्तथा त्वमपि शोभने । वयं विरहदुःखार्तास्त्वं न कालिन्दि तद् वद ॥ ९ ॥ तच्छ्रुत्वा स्मयाना सा कालिन्दी वाक्यमब्रवीत् । सापत्न्यं वीक्ष्य तत्तासां करुणापरमानसा ॥ १० ॥ कालिन्द्युवाच—आत्मारामस्य कृष्णस्य ध्रुवमात्मास्ति राधिका । तस्या दास्यप्रभावेण विरहोऽस्मान् न संस्पृशेत्

निबोध: तादहंकमना शृणु । यश्चार्थं कृत्स्नशो बुध्वा रसभावस्वरान्वितम् । विस्पष्टमद्रुतं साङ्गं श्रावयेत्स च सात्त्विकः ॥ १९ ॥ अबुध्यमानो ग्रन्थार्थं कृत्स्नशः स्पष्टमद्रुतम् । कलस्वरसमायुक्तं श्रावयेत्स च राजसः ॥ २० ॥ अबुध्यमानो ग्रन्थार्थमस्पष्टं रसवर्जितम् । शीघ्रं यः श्रावयेद्वि स्रोऽधमस्तामसः स्मृतः ॥ २१ ॥ सर्वं कर्म परित्यज्य श्रद्धाभक्त्यन्वितः सदा । कृत्स्नशो दक्षिणादानरतः श्रोता स सात्त्विकः ॥ २२ ॥ यः प्रसङ्गात्कौतुकेन शृणोति गिरिनन्दिनी । दक्षिणां च मनाक् दत्त्वा स श्रोता राजसः स्मृतः ॥ २३ ॥ श्रद्धाभक्तिविहीनो यो हेतुवादार्थदूषकः । क्रोधामूढान्वितः किञ्चिद्दक्षिणां राति नापि वा । स श्रोता तामसो ज्ञेयः शैलपुत्रि विगर्हितः ॥ २४ ॥ परं वक्तृस्वभावात्तु किञ्चित्किञ्चित्फलं लभेत् । सप्ताहश्रवणात्पाठात्सम्यगुक्तं फलं लभेत् ॥ २५ ॥ मासेनापि तथा शुभ्रु द्विमासेनापि वा पुनः । वर्षेणापि महेशानि सम्प्रदायानुसारतः ॥ २६ ॥ तथा श्रीमद्भागवतश्रवणं पठनं समम् । एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयाऽनघे । वक्तुं कः शक्नुयाद् गौरि कृत्स्नशः परमेश्वरः ॥ २७ ॥ श्रीभागवतमाहात्म्यं त्वयि यत्स्नेहात्प्रकाशितम् । न वक्तव्यं न वक्तव्यं न वक्तव्यं बहिर्मुखे ॥ २८ ॥ अन्तर्मुखे तु वक्तव्यं यत्नतः प्राणवल्लभे । गुरुर्वैष्णवभक्त्यैकजीवनोऽन्तर्मुखः स्मृतः ॥ २९ ॥ य इदं शृणुयाद्वापि पठेद्वा नित्यशः प्रिये । स श्रीकृष्णस्य पादाब्जे रतिं परमिकां लभेत् ॥ ३० ॥ गौरीतन्त्रे शिवपार्वतीसंवादे पुराणदानमाहात्म्ये श्रीभागवतमाहात्म्ये पञ्चमः पटलः । इति ।

* अथ स्कन्दपुराणोक्तं श्रीमद्भागवतमाहात्म्यम् *

व्यास उवाच—श्रीसच्चिदानन्दघनस्वरूपिणे कृष्णाय चानन्तसुखाभिवर्षिणे । विश्वोद्भवस्थाननिरोधहेतवे नुमो वयं भक्तिरसाप्तयेऽनिशम् ॥ १ ॥ नैमिषे सूतमासीनमभिवाद्य महामतिम् । कथामृतरसास्वादकुशला ऋषयोऽब्रुवन् ॥ २ ॥ ऋषय ऊचुः—वज्रं श्रीमाथुरे देशे स्वपौत्रं हस्तिनापुरे । अभिषिच्य गते राज्ञि तौ कथं किं च चक्रतुः ॥ ३ ॥ सूत उवाच—नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ४ ॥ महापथं गते राज्ञि परीक्षित् पृथिवीपतिः । जगाम मथुरां विप्रा वज्रनाभदिदृक्षया ॥ ५ ॥ पितृव्यमागतं ज्ञात्वा वज्रः प्रेमपरिप्लुतः । अभिगम्याभिवाद्याथ निनाय निजमन्दिरम् ॥ ६ ॥ परिष्वज्य स तं वीरः कृष्णैकगतमानसः । रोहिण्याद्या हरेः पत्नीर्ववन्दायतनागतः ॥ ७ ॥ ताभिः सम्मानितोऽत्यर्थं परीक्षित् पृथिवीपतिः । विश्रान्तः सुखमासीनो वज्रनाभमुवाच ह ॥ ८ ॥ परीक्षिदुवाच—तात त्वत्पितृभिर्नूनमस्मत्पितृपितामहाः । उद्धृता भूरिदुःखौघादहं च परिरक्षितः ॥ ९ ॥ न पारयाम्यहं तात साधु कृत्वोपकारतः । त्वामतः प्रार्थयाम्यङ्ग सुखं राज्येऽनुयुज्यताम् ॥ १० ॥ कोशसैन्यादिजा चिन्ता तथारिदमनादिजा । मनागपि न कार्या ते सुसेव्याः किन्तु मातरः ॥ ११ ॥ निवेद्य मयि कर्तव्यं सर्वाधिपरिवर्जनम् । श्रुत्वैतत् परमप्रीतो वज्रस्तं प्रत्युवाच ह ॥ १२ ॥ वज्रनाभ उवाच—राजन्नुचितमेतत्ते यदस्मासु प्रभाषसे । त्वत्पित्रोपकृतश्चाहं धनुर्विद्याप्रदानतः ॥ १३ ॥ तस्मान्नाल्पापि मे चिन्ता क्षात्रं दृढमुपेयुषः । किन्त्वेका परमा चिन्ता तत्र किञ्चिद् विचार्यताम् ॥ १४ ॥ माथुरे त्वभिषिक्तोऽपि स्थितोऽहं निर्जने वने । क्व गता वै प्रजात्रस्या यत्र राज्यं प्ररोचते ॥ १५ ॥ इत्युक्तो विष्णुरातस्तु नन्दादीनां पुरोहितम् । शाण्डिल्यमाजुहावाशु वज्रसन्देहनुत्तये ॥ १६ ॥ अथोटजं विहायाशु शाण्डिल्यः समुपागतः । पूजितो वज्रनाभेन निषसादासनोत्तमे ॥ १७ ॥ उपोद्घातं विष्णुरातश्चकाराशु ततस्त्वसौ । उवाच परमप्रीतस्तावुभौ परिसान्त्वयन् ॥ १८ ॥ शाण्डिल्य उवाच—शृणुतं दत्तचित्तौ मे रहस्यं व्रजभूमिजम् । व्रजनं व्याप्तिरित्यु-

ददाति यो भागवतं तेन दत्तं जगत्त्रयम् । बहुनोक्तेन किमिहैतेन दत्तः स्वयं हरिः ॥ ७ ॥ यत्पुण्यं मथुरां गत्वा यत्पुण्यं पुष्करे वरे । तत्पुण्यं कोटिगुणितं श्रीभागवतदानतः ॥ ८ ॥ यत्पुण्यं स्यात्कुरुक्षेत्रे महादानेन यत्फलम् । यत्फलं मकरे मासे स्नानेन वरवर्णिनी ॥ ९ ॥ यत्फलं सर्ववेदैश्च पुराणाद्यैश्च यत्फलम् । तत्फलं कोटिगुणितं श्रीभागवतदानतः ॥ १० ॥ परोपकारकरणे यत्पुण्यं भवति प्रिये । यत्पुण्यं सर्वसंन्यासे तत्पुण्यं कोटिशो भवेत् ॥ ११ ॥ शतधा वाचयेद्दान कोटिधा भारतं तथा । कोटिकोटिगुणं चैव पुराणात् संहिताधिकात् ॥ १२ ॥ श्रीमद्भागवतस्यापि कलां नार्हन्ति षोडशीम् । सन्देहो नाऽत्र कर्तव्यः प्रमाणं व्याससमानसम् ॥ १३ ॥ नास्तिकाय च मूर्खाय हेतुवादरताय च । धर्मध्वजाय लुब्धाय न च देयं कदाचन ॥ १४ ॥ लोभपैशुन्यमात्सर्यासूयाहिंसायुते हृदि । न वर्तते हरिकथा श्रीभागवतसंश्रिता ॥ १५ ॥ को वा वदेद्भागवतं विना श्रीरसिकाश्रयम् । विद्यया तपसा बुद्ध्या टीकया वा मनीषया ॥ १६ ॥ विशेषतः कर्मजडा विप्रा मीमांसकाः प्रिये । श्रीमद्भागवतास्वादरहिताः सहिता मदैः ॥ १७ ॥ तेषामग्रे न वक्तव्यं गोपनीयं च शाश्वतम् । शास्त्रं परमं देवि न चेद्दोषं स प्राप्नुयात् ॥ १८ ॥ ये चाऽन्ये देवतामन्त्रोपासका येऽसुसद्धियः । ये पाषण्डमनुप्राप्तास्तैरिदं दुर्गमं महत् ॥ १९ ॥ उपदेशं विना व्यासो नाज्ञासीत्पूर्वमीश्वरम् । तस्मात्प्रयत्नतः कार्य उपदेशः सतो मुखात् ॥ २० ॥ यथा गदं वीर्यतममनुपानं विना तथा । नोपकुर्याच्छिवे तद्वदुपदेशं विना त्विदम् ॥ २१ ॥ सत्यं सत्यमहं वक्ष्ये शृणु गौरि मम प्रिये । श्रीमद्भागवतास्वादी सत्पूज्यः पूज्य एव सः ॥ २२ ॥ किं तस्य शक्र सम्पत्त्या पारमेष्ठेन वाऽथ किम् । मत्सम्पत्त्या ब्राह्मचलक्ष्म्या यो भागवतनिर्वृतः ॥ २३ ॥ यत्राऽऽस्ते श्रीभागवतव्याख्यानैकपरो नरः । तत्र सर्वाणि तीर्थानि धन्यो देशो नृपस्तथा ॥ २४ ॥ नृपो भूत्वा भागवतं यदा न शृणुयात्प्रिये । तद्यशो धिक् प्रतापं धिक् धिक् लक्ष्मीं भक्त्यभावतः ॥ २५ ॥ गौरीतन्त्रे शिवपार्वतीसंवादे पुराणदानमाहात्म्ये चतुर्थः पटलः ।

शिवोवाच—वैष्णवाग्रगुरुश्रेष्ठ सम्प्रदायं वद प्रभो । श्रीमद्भागवतस्यास्य श्रोतुं कौतूहलं मन ॥ १ ॥ शिव उवाच—विना भागवतं शास्त्रं नैव भक्तिर्नृणामिह । निःशेषान्तरमालिन्यहृद्दत्यन्तं यतः शिवे ॥ २ ॥ यन्नारायणरूपेण भगवानवदत्स्वयम् । ब्रह्माणं ब्रह्मरूपेण ततः सुन्दरि नारदम् ॥ ३ ॥ तद्रूपेण ततो व्यासं तद्रूपेण शुकं तथा । शुकरूपेण भगवद्गीतं तत्परमं प्रिये ॥ ४ ॥ घोरे तमसि मग्नानामुद्धारार्थं वरानने । यत्पुनः शेषरूपेण सनकाय प्रकाशितम् ॥ ५ ॥ तद्रूपेण तथा सांख्यायनाय तत्स्वरूपिणा । पराशराय तद्रूपेण मित्रासूनवे ततः ॥ ६ ॥ विदुराय महाभागवताय गिरिनन्दिनी । एवं श्रीमद्भागवतं सम्प्रदायप्रकाशितम् ॥ ७ ॥ श्रीमद्भागवते विद्या सामान्यधियमत्र ये । कुर्वन्ति ते च महाघोरे पच्यन्ते तमसि ध्रुवम् ॥ ८ ॥ यथा गुरौ नृबुद्धिं च यथामन्त्रेण बुद्धिकम् । प्रतिमासु शिलाबुद्धिं कुर्वन्तो यान्त्यधस्ततः ॥ ९ ॥ यथा सर्वेश्वरे विष्णौ देवसामान्यदर्शिनः । यथा श्रीमद्भागवते शास्त्रसामान्यदर्शिनः ॥ १० ॥ अत्र मत्शास्त्रविद्वांसो देवि दर्भाग्रबुद्धयः । मदेन मोहिताः सन्ति शतशोऽथ सहस्रशः ॥ ११ ॥ पश्यन्तोऽपि न पश्यन्ति यथा विष्णुतमोयुताः । पठन्तोऽपि न जानन्ति तथा भागवतं शिवे ॥ १२ ॥ येषां श्रीवैष्णवजने बहिरङ्गारतिर्नहि । तेऽपि जानन्ति सरसं श्रीमद्भागवतं किल ॥ १३ ॥ ग्रन्थागमनकाले तु अभ्युत्थानं करोति यः । तथाऽनुगमनं सुभ्रु सोऽपि जानाति तद्रसम् ॥ १४ ॥ यथा गुरुमुखान्मन्त्रश्रवणे आसनं नहि । ग्रन्थश्रवणकाले तु वर्जयेदासनं तथा ॥ १५ ॥ सर्वं कर्म परित्यज्य भूत्वैकाग्रमनाः प्रिये । तूष्णीं भूतो हरिकथां शृणुयाद्रसनिर्भरः ॥ १६ ॥ कथनान्तरेण स्याद् यावद् ग्रन्थानुबन्धनम् । न तावत्सहसा सुभ्रु समुत्तिष्ठेत्कथञ्चन ॥ १७ ॥ प्रसङ्गात्कथयेद् गौरि श्रोतृवाचकयोः कथाम् । सात्त्विको राजसश्चेति तामसो वाचको भवेत् ॥ १८ ॥ तथा श्रोताऽपि

गिरिसुते कुर्यात्कोऽप्यः पापतमस्ततः ॥ ३१ ॥ तत्संपर्को महेशानि नरं नयति नारकम् ॥ ३२ ॥ गौरितन्त्रे शिवपार्वतीसम्वादे पुराणदानमाहात्म्ये श्रीभागवतमाहात्म्ये द्वितीयः पटलः ।

उमोवाच—प्राणनाथ कृपासिन्धो ब्रूहि शास्त्रविदां वर । कस्य स्कन्धस्य श्रवणे किं किं भवति वा नृणाम् ॥१॥ शिव उवाच—उदङ्मुखः प्राङ्मुखो वा वाचकः कथयेत्कथाम् । आस्ता गौरि नियमो ब्रह्मसत्रेण विद्यते ॥ २ ॥ कथा भागवती यत्र तत्र साक्षाच्छ्रियः पति । परिवारगणैर्युक्तो मुदा वसति पार्वति ॥ ३ ॥ तत्राऽन्येषां कथा का वा यत्र भागवतोत्तमा ॥ सर्वेषां चैव स्कन्धानां पठनाच्छ्रवणात्प्रिये ॥ ४ ॥ भवन्ति पुंसां सर्वेऽपि पुरुषार्था न संशयः । तथापि किञ्चिद्विशिष्टं शृणु त्वं प्राणवल्लभे ॥ ५ ॥ प्रथमस्कन्धश्रवणाद् वैष्णवं तनयं लभेत् । द्वितीयस्कन्धश्रवणात्परमां गतिमाप्नुयात् ॥ ६ ॥ तृतीयस्कन्धश्रवणाल्लिङ्गदेहेन मुच्यते । चतुर्थस्कन्धश्रवणात्परमं पदमाप्नुयात् ॥ ७ ॥ पञ्चमस्कन्धश्रवणान्मुक्तो भवति नारकैः । षष्ठस्य श्रवणादेव ब्रह्महत्यां व्यपोहति ॥८॥ सप्तमस्कन्धश्रवणात्सत्सङ्गतिमवाप्नुयात् । अष्टमश्रवणादेवि ऐश्वर्यमतुलं लभेत् ॥ ९ ॥ नवमस्कन्धश्रवणात्सन्ततेर्वृद्धिमाप्नुयात् । दशमश्रवणेनाऽत्र रसास्वादी भवेद्धरेः ॥१०॥ एकादशस्य श्रवणात् ज्ञानविज्ञानभक्तिमान् । द्वादशश्रवणादेवि आश्रयं लभते नरः ॥ ११ ॥ बहुना किमिहोक्तेन सर्वं सर्वत्र तिष्ठति । केवलं श्रीहरेर्भक्तिर्महाफलमिति श्रुतम् ॥ १२ ॥ श्रीभागवतमाहात्म्यं वक्तुं कः शक्नुयात् प्रिये । यथा गुणा भगवतस्तथा भागवतस्य च ॥ १३ ॥ कर्मप्रधानं प्रवदन्ति केचित् ज्ञानप्रधानं प्रवदन्ति चाऽन्ये । अत्रैव भद्रे त्रिमवासनातः परः परात्पराऽत्र भवानि भक्तिः ॥ १४ ॥ यस्य या वासना गौरि तस्य सा दुरतिक्रमात् । सितार्क्तं निम्बपत्रं च मधुरं न भवेत् क्वचित् ॥ १५ ॥ श्रोतव्यं रसिकादेव वक्तव्यं रसिकाग्रतः । स्ववासनानुसारेण विविधं च यथा मनः ॥ १६ ॥ नियमेन च नित्यं हि शृणुयाद्यः शुभानने । तस्य विघ्ने समुत्पन्नेनुतापः फलदो भवेत् ॥ १७ ॥ यो वक्ति श्रीभागवतं सदैव श्रीशुकः स्वयम् । अन्यथा पर्वतसुते को वक्तुं शक्तिमान्भवेत् ॥ १८ ॥ शुकास्यपुटसञ्जित्वात्स्वादु भागवतं फलम् । शुकवद्वदते शास्त्रं शुकस्तेन निगद्यते ॥ १९ ॥ अथवा शुक्लपक्षाज्जातः शुक इतीरितः । किं वा शुक्लस्वरूपत्वाच्छुक इत्यभिधीयते ॥ २० ॥ सर्वज्ञाननिधित्वाच्च स ऋषिः परिकीर्तितः ॥ यमुनाया एकदेशे बादरं वनमस्ति हि ॥ २१ ॥ अयनं तस्य तद्यस्मात् स व्यासो बादरायणः । तत्सुतः शुक उत्पन्नो बादरायणिसंज्ञकः ॥ २२ ॥ शृणोति यो भागवतं 'परीक्षित्' ज्ञेय एव सः । सर्वत्र कृष्णं पश्येद्यत् कृष्णभावपरीक्षकः ॥ २३ ॥ तस्मात्परीक्षिद्राजा सः यतो भक्त्या विराजते ॥ २४ ॥ भक्त्या ध्रुवं नरं याति भूयोऽपि नृप ईरितः ॥ अत्रैव वाच्यो भगवान् नन्दगोकुलनन्दनः । उपक्रमोपसंहारे मध्ये मध्ये स कीर्तितः ॥ २५ ॥ प्रयोजनं हरेर्भक्तिरन्यत्स्यादानुषङ्गिकम् ॥ २६ ॥ आश्रयाश्रयि सम्बन्धः श्रद्धावन्तोऽधिकारिणः । पुराणेषु परं गुह्यं यथा कृष्णस्तथा इदम् ॥ २७ ॥ गौरीतन्त्रे शिवपार्वतीसम्वादे पुराणदानमाहात्म्ये श्रीभागवतमाहात्म्ये तृतीयः पटलः ।

शिवोवाच—चन्द्रशेखरभूतेश वद कौतूहलं मम । श्रीभागवतदानादेश्चरितं परमं महत् ॥१॥ शिव उवाच—दानं ददाति यो देवि जनो भागवतं सदा । विप्राय भक्तियुक्ताय ऋजवे सम्प्रदायिने ॥ २ ॥ विशेषतः कृष्णमन्त्रोपसकाय वरानने । किं पुनर्वै भाद्रपदे पौर्णमास्यां यथाविधि ॥ ३ ॥ अष्टादशपलैः कुर्यात्स्वर्णसिंहासनं प्रिये । अष्टादशापि सौपाणि तावत्यः स्वर्णमालिका ॥४॥ अष्टादशापि निष्कानि गौरि देया च दक्षिणा । अथवार्द्धं तदर्धं वा तदर्धं वा वरानने ॥ ५ ॥ कुर्यात्सर्वं महेशानि वित्तशाठ्यं न कारयेत् । दानस्यावश्यकत्वाच्च यथाशक्ति प्रदापयेत् ॥ ६ ॥

ञ्यालगिलिता मन्दबुद्धयः । विहसन्ते भागवतं ते मूढा वीरमानिनः ॥ २१ ॥ यः शृणोति सतां निन्दां विमाः शास्त्रस्य सुन्दरि । कामाद् भोगात्कौतुकाद्वा नश्यति सुकृतं कृतम् ॥ २२ ॥ धन्यौ च तस्य पितरौ धन्यास्तस्य च बान्धवाः ॥ धन्यस्तस्य जनुर्भद्रे यो भागवतमर्चति ॥ २३ ॥ पुष्पैर्धूपैश्च सुरभिश्चन्दनैर्वस्त्रभूषणैः । उच्चावचैश्चोपहारैस्तथा तद्वाचके जनम् ॥ २४ ॥ गौरीतन्त्रे शिवपार्वतीसम्वादे पुराणदानमाहात्म्ये श्रीभागवतमाहात्म्ये प्रथमः पटलः ।

शिवोवाच—सदाशिव महासाधो कीदृक् भागवतवाचकः। किं लक्षणं भागवतं तन्मे ब्रूहि दयानिधे ॥ १ ॥ शिव उवाच—नातिनीचस्वरोनात्युच्चस्वरो न विलम्बी । न स्पृतं खलो देवि नालसः क्रोधनश्चलः ॥ २ ॥ न स्त्रैणो न च साधुद्विट् स्याद् भागवतवाचकः । दिव्यमासनमास्थाय वाचकः कथयेत्कथाम् ॥ ३ ॥ स्कन्धाध्यायाद्यन्तपद्यं द्विस्त्रिर्नोच्चारयेत्क्वचित् । तथा नमस्क्रिया कार्या वक्तृ-पृच्छक-श्रोतृभिः ॥ ४ ॥ उपक्रमोपसंहारे सादरं गिरिनन्दिनि । अमान्यो हेतुवादी च विष्णुभक्तो जितेन्द्रियः ॥५॥ श्रद्धावान् सारसङ्ग्राही श्रोता भवति नान्यथा । हेतुवादरते मूर्खः स्त्रीजितः कृपणः शठः ॥ ६ ॥ अहं युक्क्रोधनोऽसाधुः श्रोता न स्याद्वरानने । श्रोतृप्रियो भवेद्वक्ता श्रोता वक्तृप्रियो भवेत् ॥ ७ ॥ अन्यथा तयोर्योगे रसो नैवोपजायते । अश्नन्ननश्नन् शृणुयाद्वाचयेद्वा धरात्मजे ॥ ८ ॥ स कामः शृणुयात्सुभ्रु कथयेद्वा उपोषितः । भाग्यवाञ्छृणुयाद् ब्रूयात्सदा विष्णुपरायणः ॥ ९ ॥ यः पठेत्संहितां कृत्वा शृणुयाद्वा वरानने । अश्वमेधसहस्रस्य वर्षे वर्षे लभेत्फलम् ॥ १० ॥ सर्वतीर्थावगाहोत्थं यच्च सर्वत्रतोद्भवम् । तत्फलं कोटिगुणितं संहिताश्रुतिमात्रतः ॥ ११ ॥ अर्थं विना तु यः पाठः संहिता सा निगद्यते । अधीयन्ते च वृत्त्यर्थं ये तु भागवतं शुभम् ॥ १२ ॥ हरिणा स्वयमुद्दिष्टं तेऽपि सद्गतिमाप्नुयुः ॥ श्रीभागवतपाठार्थं यः प्रयच्छति मन्दिरम् ॥ १३ ॥ सुन्दरं सुदृढं गौरि स स्यात्कृष्णप्रिय शिवरम् । ससागरा मही तेन दत्ता स्यान्नाऽत्र संशयः ॥ १४ ॥ यस्तु तद्वाचकायैव धनं दद्यात्सुपुष्कलम् । नानातीर्थेषु विधिवत्स्नानादानैश्च तस्य किम् ॥१५॥ स्वर्णं रौप्यं च रत्नानि नागेन्द्रं च रथं हयम् । गृहं दद्यात् यथाशक्ति वाचकाय च दक्षिणाम् ॥ १६ ॥ देवतानां यथा विष्णुर्नक्षत्राणां यथा शशी । तीर्थानां च यथा गङ्गा वैष्णवानां यथा भवम् ॥ १७ ॥ वर्णानां चैव सर्वेषां यथा भूमिसुरावराः । शास्त्राणां च यथा वेदाः पुराणानामिदं तथा ॥ १८ ॥ युगानां च यथा सत्यं मासानां मार्गशीर्षकम् । एकादशीतिथीनां च पुराणानामिदं तथा ॥१९॥ एतस्य पाठकाले तु अन्यालापांश्च वर्जयेत् । उपक्रमोपसंहारे हरिकीर्तनमाचरेत् ॥ २० ॥ कथायां कथ्यमानायां विवादं ये प्रकुर्वते । तेषां द्वेष्टा स्वयं विष्णुर्यावदाभूतसंप्लवम् ॥ २१ ॥ गायत्री भाष्यरूपाय द्वादशस्कन्धसंयुतः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ॥ २२ ॥ पञ्चत्रिंशोत्तराध्याय त्रिंशतायुक्त ईश्वरे । द्वैपायनमनः क्षोभतमोहननभास्करः ॥ २३ ॥ प्रथमश्च द्वितीयश्च चरणौ द्वौ प्रकीर्तितौ । तृतीयश्च चतुर्थश्च द्वावूरू समुदीरतौ ॥ २४ ॥ पञ्चमो नाभिदेशश्च षष्ठो हृदयमुच्यते । सप्तमश्चाष्टमश्चैव द्वौ बाहू परिकीर्तितौ ॥ २५ ॥ नवमः कण्ठदेशः स्याद्दशमो मुखमुच्यते । एकादशो भालतटं द्वादशस्तु शिखोच्यते ॥ २६ ॥ एवं सर्वं भागवतं श्रीहरेरङ्गमुच्यते । रसिकास्तद्विजानन्ति नान्येषां पदमत्र हि ॥ २७ ॥ तत्र श्रीदशमः श्रेष्ठस्तत्र गोकुलकेलयः । तत्रैव श्रीरासलीला गोपिकागीतिकास्ततः ॥ २८ ॥ तत्राटवीति पद्यं तु मोच्यते परमं पदम् । तत्रैव च रसश्लोकः प्रेमनियसिरूपकः ॥ २९ ॥ यस्तु श्रुत्वा भागवतं वचनकूटनमाचरेत् । हेयबुद्ध्या तस्य शुद्धिर्नास्ति नास्ति वरानने ॥ ३० ॥ पारम्पर्यागतं योग्यं वाचकं लंघयेच्छुभे । यस्तु मौग्ध्यात्स गुरुहा सत्यं सत्यं वदाम्यहम् ॥ ३१ ॥ श्रीभागवतगोष्ठ्यां यःप्रभुत्वं सर्वमेव च । कलि

माहात्म्यश्रवणफलम्—हरिरुवाच—मत्कपोलौ च भ्रुकुटिर्नवमस्कन्ध इष्यते। एतस्य श्रवणाद् गोघ्नः सद्गतिं लभतेतराम् ॥ १ ॥ इतिहासं चात्र शृणु वङ्गदेशे कृषीवलः। विश्राम इति विख्यातो बभूव द्विजपूजकः ॥ २ ॥ नानान्नमुप्त्वा भूमौ स प्रोदन्नं तन्नृपाय वै। ददौ करार्थं तच्छेषं स्वगृहं चानयत्पुनः ॥३॥ गृहं गत्वा ब्राह्मणेभ्यो ददौ चान्नं कृषीवलः। कदाचित्स्वक्षेत्रे धेनुं स्थिता गा निशि दृष्टवान् ॥ ४ ॥ दण्डेन तास्तताडेति मत्क्षेत्रं भक्षितं हि वः। निशम्य तद्ध्वनिं गावो दुद्रुवुस्तु दिशो दश ॥ ५ ॥ एका वृद्धा मृता धेनुस्तां दृष्ट्वा दुःखितोऽभवत्। उत्थाप्य तां नदीतीरे दूरे प्रक्षिप्तवान्पुनः ॥ ६ ॥ प्रायश्चित्तं न कृतवाँल्लोके ख्यातिभया तदा। देहान्ते नरकाँल्लेभे बहुकालं स पापकृत् ॥७॥ पुनश्चाण्डालतां प्राप्तो मृता माता मृतः पिता। मातृष्वस्रा गृहे सोऽन्धो भूत्वा कुष्ठरुजा जित. ॥ ८ ॥ उपवास दशवर्षाणि ततो मातृष्वसा मृता। ततो यष्टिं गृहीत्वान्धो गेहे गेहे क्षुधान्वितः ॥ ९ ॥ भ्रमन्दैवात्कदाचित्स ब्राह्मणस्य गृहं गतः। तत्र भागवती गाथा नवमस्कन्धजा श्रुता ॥ १० ॥ तदा ववर्ष जलदो बहुधारासमन्वितः। स चाण्डालो मार्गतः श्लोकार्द्धं नवमस्य हि। शुश्राव च्छायामाश्रित्य ततः पङ्के पपात ह ॥ ११ ॥ तदैव स मृतो लोकं वैकुण्ठं प्रजगाम वै। श्लोकार्धश्रवणेनैव मुक्तो गोवधपापतः ॥ तत एतादृशं शास्त्रं न लोके पापराशिनुत् ॥ १२ ॥

## ❀ अथ गौरीतन्त्रोक्तं श्रीमद्भागवतमाहात्म्यम् ❀

कैलासशिखरारूढं भक्तिशास्त्रविशारदम्। सदाशिवं नमस्कृत्य गौरी पप्रच्छ सादरम् ॥ १ ॥ पार्वत्युवाच—सदाशिवशिवाधार शङ्करश्रीधरप्रिय। गिरिशाखिलसद्गोष्ठीनीराजितपदाम्बुज ॥ २ ॥ किञ्चित् पृच्छामि भो देव ब्रूहि कृत्वा कृपां मयि। श्रीभागवतमाहात्म्यं श्रोतुं कौतूहलं मम ॥ ३ ॥ महादेव उवाच—शृणु देवि प्रवक्ष्यामि गुह्याद् गुह्यतमं प्रिये। श्रीभागवतमाहात्म्यं सर्वपापविनाशनम् ॥ ४ ॥ यदि न स्याद्भागवतं कलौ सर्वमलाकुले। तदा गतिः कथं नृणां सत्यं सत्यं मयोदितम् ॥ ५ ॥ जगत्त्राणाय हरिणा श्रीमद्भागवतं परम्। भुवि प्रकटितं गौरि कारुण्येन दयालुना ॥ ६ ॥ ये तु भागवतं शास्त्रमन्यशास्त्रेण दुर्धियः। समत्वेनैव जानन्ति तेषां दैवं पराङ्मुखम् ॥ ७ ॥ ते पतन्ति महाघोरे सौर्यलोके हि मानवाः। धिक् धिक् तेषां प्रसङ्गोऽपि ये भागवतदूषकाः ॥ ८ ॥ येषां श्रोतुं मनीषाऽभूच्छ्रीमद्भागवतस्य च। तेषामनेकजन्मोत्थपातकानि व्रियन्ति हि ॥ ९ ॥ किमिहोक्तेन विधिना सद्यः कृष्णः प्रसीदति। अनेकजन्मसंसिद्धेः शिवो भवति यो नरः ॥ १० ॥ श्रीभागवतशुश्रूषा तस्यैव हृदि जायते। कोटिजन्मान्तरे येषामशुभं कर्मभामिनि ॥ ११ ॥ तेषां गतिर्भवेद् गौरि श्रीभागवतनामतः। स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ १२ ॥ सर्वशास्त्रावगाही स या भगवतचिन्तकः। तस्य दर्शनमात्रेण दूरतो याति पातकम् ॥ १३ ॥ किं तस्य दानैः पुरुषिमखैर्वा किं तस्य पुण्यैश्चिरसञ्चितैर्वा। किं तस्य शास्त्रैः किमु तस्य योगैः किं तस्य मैत्र्या किमुतस्य जाप्यैः ॥ १४ ॥ किं तस्य बुद्ध्या किमु तस्य शुद्ध्या किं तस्य ऋद्ध्या बत शैलपुत्रि। यस्याऽनिशं श्रोत्रपवित्रभागवतामृताम्भोधिरसावगाहः ॥ १५ ॥ दुर्लभं मानुषं जन्म लब्ध्वाऽपि भुवि मानवाः। श्रीमद्भागवतास्वादरहितास्ते जना वृथाः ॥ १६ ॥ कीर्त्तयन्ति च ये भक्त्या भागवतं धरात्मजे। तन्नामकीर्त्तयन्त्येव सर्वे देवा महर्षयः ॥ १७ ॥ षट्शास्त्रवेत्ता निगमप्रवीणस्तथागमव्याकरणादिनिष्ठः। विना हरेर्भागवतप्रसादज्जानाति को भागवतान्तरार्थम् ॥ १८ ॥ यत्कामिनां कामदात् अर्थिनामर्थदात् यत्। धर्मार्थिनां धर्मदात् मुक्तीच्छूनां च मुक्तिदम् ॥ १९ ॥ भक्तीच्छूनां पराभक्तिदात् भागवतं प्रिये। ये न शृण्वन्ति निन्दन्ति ते त्याज्याः सुदूरतः ॥ येऽहङ्कारमदा-

तथा मधुरवाक्योंसे, विचित्र पराक्रमयुक्त लीलाओंसे एवं सर्वाङ्ग सुन्दर अपनी मधुर मूर्तिसे मनुष्यलोकको आनन्दित किया ॥ ६४ ॥ जिन भगवान्‌के मकराकृत कुण्डलोंसे सुन्दर दोनों कर्ण तथा उन्हीं कुण्डलोंकी प्रभासे देदीप्यमान कपोलोंसे युक्त और विलास-हास्यसे पूर्ण नित्योत्सवरूप मुखमण्डलको देखकर मुदित हुए व्रजवासी स्त्री-पुरुषोंके नेत्र तृप्त नहीं होते थे, बल्कि उन्हें नेत्रोंके उन्मेष-निमेष करनेवाले राजा निमिके ऊपर क्रोध आता था, जिनका पलकोंके ऊपर निवास है ॥ ६५ ॥ पहले भगवान् अपने अलौकिकरूपसे ही अवतरित हुए। तदनन्तर लीला करनेके लिये मनुष्याकार हो गये और व्रजको चले गये। वहाँ जाकर उन्होंने व्रजवासियोंके शत्रुओंको मारकर बहुत कार्य सिद्ध किये। तदनन्तर बहुतसे विवाह करके बहुत सन्तान उत्पन्न किये और उसके बाद अपने वेदमार्गका जनतामें प्रचार करते हुए उन्होंने नाना यज्ञोंसे परमात्मस्वरूप अपना ही यजन किया ॥ ६६ ॥ कौरवोंमें उठे हुए गृहविवादको हेतु बनाकर अपनी दृष्टिसे ही युद्धक्षेत्रमें युद्ध करनेके लिये उपस्थित राजाओंकी आयु और सेनाका नाश करते हुए पृथिवीके अनन्त भारको उतारकर एवं अर्जुनकी विजयघोषणा कराकर और उद्धवके लिये तत्त्वज्ञानका उपदेश देकर भगवान् श्रीकृष्ण अपने परमधामको चले गये ॥ ६७ ॥

कुपिता निमेश्च ॥ ६५ ॥ जातो गतः पितृगृहाद् व्रजमेधितार्थो हत्वा रिपून्सुतशतानि कृतोरुदारः ॥ उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६६ ॥ पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणामन्तः समुत्थकलिना युधि भूपचम्वः ॥ दृष्टया विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम ॥६७॥ इति श्रीमद्भागवते महापुराणे वैयासिक्यां पारमहंस्यां संहितायामष्टादशसाहस्र्यां नवमस्कन्धे श्रीसूर्यसोमवंशानुकीर्तने यदुवंशानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तः नवमः स्कन्धः ।

चौबीसवें अध्यायका सार—श्रीशुकदेवजीने कहा—हे महीपते, राजा विदर्भके लड़के रोमपादकी पाँचवीं पीढ़ीमें राजा चेदि हुए और उनके पुत्र हुए राजा चैद्य। राजा विदर्भके पुत्र क्रथकी बीसवीं पीढ़ीमें सात्वत हुए। सात्वतसे देवावृध और उनसे बभ्रु उत्पन्न हुए। सात्वतके पुत्र वृष्णिसे युधाजित् हुए और युधाजित्की पाँचवीं पीढ़ीमें सात्यकि हुए। शिनि पुत्र वृष्णिसे श्वफल्क हुए और उनसे अक्रूर हुए। युधाजितके दूसरे लड़के अनमित्रसे निम्न हुए तथा उनसे सत्राजित्। सात्वतके पुत्र अन्धकसे कुकुर हुए और कुकुरकी ग्यारहवीं पीढ़ीमें राजा उग्रसेन हुए। उग्रसेनको लड़का कंस तथा देवकी आदि लड़कियाँ भी हुई थीं। वृष्णिके लड़के चित्ररथसे विदूरथ और उनसे हुए देवमीढ। देवमीढके पुत्र शूर थे तथा उनके थे लड़के वसुदेव। वसुदेवके देवभाग आदि नव भाई थे। इस वंशकी हजारों शाखाएँ थीं। वसुदेवसे रोहिणीमें बलदेवजी उत्पन्न हुए। हे राजन्, वसुदेवजीसे रोहिणीमें ही उत्पन्न एक लड़की भी थी, जिसका नाम सुभद्रा था, वह रिस्तेमें बलदेवजी की बहिन और आपकी पितामही लगती है। हे महाराज, पृथिवीका भार उतारनेके लिए साक्षात भगवान् विष्णुने ही देवताओंकी प्रार्थनासे देवकीके गर्भसे अवतार लिया।

❀ चौबीसवाँ अध्याय समाप्त ❀

कथा ॥ ५०-५३ ॥ कीर्तिमान्, सपेण, भद्रसेन, ऋजु, समर्दन, भद्र एवं महोश्वर भगवान् संकर्षण और आठवें गर्भसे तो साक्षात् भगवान्‌ने ही अवतार लिया। देवकीको सुभद्रा नामकी कन्या भी हुई थी, जो तुम्हारी पितामही हुई ॥ ५४, ५५ ॥ हे राजन्, जब-जब धर्मकी हानि एवं अधर्मकी वृद्धि होती है तब-तब भगवान् धर्मकी रक्षाके तथा वृद्धिके लिये अवतार धारण करते हैं ॥ ५६ ॥ हे महीपते, मायाके नियामक, संगरहित, सबके साक्षी एवं सर्वव्यापक जो श्री भगवान् हैं उनके जन्म या कर्मका कारण मायाविनोदके अतिरिक्त और क्या हो सकता है ॥ ५७ ॥ जिन भगवान्‌की मायामयी लीलाएँ जीवात्माके अनुग्रहके लिये होती हैं, जिन लीलाओंसे विश्वकी उत्पत्ति, पालन एवं प्रलय होता है और उन लीलाओंकी निवृत्ति

राजानः कल्पवर्षाद्या उपदेवासुता दश ॥ वसुहंससुवंशाद्याः श्रीदेवायास्तु षट् सुताः ॥ ५१ ॥ देवरक्षितया लब्धा नव चात्र गदादयः ॥ वसुदेवः सुतानष्टावादधे सहदेवया ॥ ५२ ॥ पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ॥ वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ॥ ५३ ॥ कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ॥ ऋजुं संमर्दनं भद्रं सङ्कर्षणमहीश्वरम् ॥ ५४ ॥ अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल ॥ सुभद्रा च महाभागा तव राजन्पितामही ॥ ५५ ॥ यदा यदेह धर्मस्य क्षयो वृद्धिश्च पाप्मनः ॥ तदा तु भगवानीश आत्मानं सृजते हरिः ॥५६॥ न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ॥ आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥५७॥ यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ॥ अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥ अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ॥ भुव आक्रम्यमाणाया अभाराय कृतोद्यमः ॥ ५९ ॥ कर्माण्यपरिमेयाणि मनसाऽपि सुरेश्वरैः ॥ सहसङ्कर्षणश्चक्रे भगवान्मधुसूदनः ॥ ६० ॥ कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ॥ अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ॥ ६१ ॥ यस्मिन्सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ॥ श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥ ६२ ॥ भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ॥ श्लाघनीयेहितः शश्वत्कुरुसृञ्जयपाण्डुभिः ॥ ६३ ॥ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६४ ॥ यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् ॥ नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः

ही जीवके मोक्षका कारण है ॥ ५८ ॥ तथा जिन भगवान्‌ने राजचिह्नधारी एवं अनेक अक्षौहिणी सेनासे सम्पन्न राक्षसोंसे आक्रान्त पृथिवीका भार दूर करनेके लिये महाभारत युद्धरूपी महान् उद्योग किया ॥ ५९ ॥ उन भगवान् मधुसूदनने बलदेवजीके साथ अनेक अद्भुत कर्म किये, जिनकी सुरेश्वरादि देवगण मनसे भी कल्पना नहीं कर सकते ॥ ६० ॥ श्रीकृष्णजीने इसप्रकार कलियुगमें होनेवाले भक्तोंके ऊपर अनुग्रह करनेके लिये उनके दुःख शोक तथा अज्ञानका नाश करनेवाले पवित्र यशका विस्तार किया है ॥ ६१ ॥ सत्-पुरुषोंके कर्णोंके लिये अमृततुल्य भगवान्‌के जिस यशरूपी तीर्थ सरोवरमें अपने श्रोत्ररूप अञ्जलिसे एक बार भी आचमन करने से मनुष्यकी समस्त कर्मवासनाएँ नष्ट हो जाती हैं ॥६२॥ जिन भगवान्‌के पवित्र चरित्रोंकी प्रशंसा भोज, वृष्णि, अन्धक, मधु, शूरसेन, दशार्ह कुरु, सृञ्जय और पाण्डु आदि सब लोग करते हैं ॥ ६३ ॥ जिन भगवान् श्रीकृष्णजीने मधुर हास्यपूर्वक अवलोकन

देशके धृष्टकेतु नामक राजाके साथ श्रुतकीर्तिका विवाह हुआ। उनमें सन्तर्दन आदि पाँच पुत्र उत्पन्न हुए॥३८॥ जयसेनने राजाधिदेवीके साथ विवाह करके विन्द तथा अनुविन्द नामके दो पुत्र उत्पन्न किये। चेदिराज दमघोषने श्रुतश्रवाके साथ विवाह किया॥३९॥ उसका पुत्र शिशुपाल हुआ। उसकी उत्पत्ति मैंने कह दी है। अब वसुदेवके भाइयोंका वंश सुनिये—कंसा नामकी भार्यामें देवभागके चित्रकेतु और बृहद्बल नामक दो पुत्र हुए॥४०॥ एवं कंसवती भार्यामें देवश्रवाको सुवीर और इषुमान् दो पुत्र हुए। कङ्का भार्यामें आनकको सत्यजित् तथा पुरुजित ये दो पुत्र हुये॥४१॥ राष्ट्रपाली भार्यामें सृञ्जयने वृष एवं दुर्मर्षणादि पुत्रोंको उत्पन्न किया। श्यामकके शूरभूमिके गर्भसे हरिकेश और हिरण्याक्ष ये दो पुत्र उत्पन्न हुए॥४२॥ वत्सकने मिश्रकेशी अप्सरामें वृकादि पुत्रोंको उत्पन्न किया। वृकके दुर्वाक्षी भार्यामें तक्ष, पुष्कर और शालादि पुत्र उत्पन्न हुए॥४३॥ शमीकके सुदामिनीके गर्भसे सुमित्र और अर्जुनपाल आदि पुत्र हुए। कंकके (आनकके) कर्णिकाके गर्भसे ऋतधाम तथा जय पुत्र उत्पन्न हुए। वसुदेवकी पौरवी, रोहणी, भद्रा, मदिरा, रोचना, इला इत्यादि देवकी प्रमुख बहुत सी स्त्रियाँ रहीं॥४४,४५॥ उनमें रोहणीके गर्भसे बलदेव, गद, सारण दुर्मद, विपुल, ध्रुव और कृतादि पुत्र हुए एवं पौरवीके गर्भसे सुभद्र, भद्रवाह, दुर्मद, भद्र तथा भूत आदि बारह पुत्र हुए॥४६,४७॥ इसीप्रकार मदिराके गर्भसे नन्द, उपनन्द, कृतक और शूरादि पुत्र हुए। इसीप्रकार भद्राके गर्भसे केशी नामका एक प्रतापि पुत्र हुआ॥४८॥ रोचनाके गर्भसे वसुदेवके हस्त, हेमाङ्गद आदि पुत्र हुए और इलाके गर्भसे उरु वल्कादि बहुतसे यदुमुख्य पुत्र पैदा हुए॥४९॥ हे राजन्, धृतदेवके गर्भके वसुदेवको विपृष्ट और शान्तिदेवाके गर्भसे श्रुत, प्रतिश्रुत आदि पुत्र हुए, उपदेवाके गर्भसे राजा कल्प, वर्ष आदि दस पुत्र हुए तथा श्रीदेवाके गर्भसे वसु, हंस, सुवंश आदि छः पुत्र एवं देवरक्षिताके गर्भसे गद आदि नौ पुत्र उत्पन्न हुए। जैसे साक्षात् धर्मने आठों वसुओंको उत्पन्न किया वैसेही वसुदेवने सहदेवाके गर्भसे पुरु-विश्रुत मुख्य आठ श्रेष्ठ पुत्र उत्पन्न किये। देवकीके गर्भसे भी उदार श्रीवसुदेवजीने इन आठ पुत्रोंको उत्पन्न

सुताः॥३८॥ राजाधिदेव्यामावन्त्यौ जयसेनोऽजनिष्ट ह॥ दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत्॥३९॥ शिशुपालः सुतस्तस्याः कथितस्तस्य संभवः॥ देवभागस्य कंसायां चित्रकेतुबृहद्बलौ॥४०॥ कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा॥ कङ्कायामानकाज्जातः सत्यजित्पुरुजित्तथा॥४१॥ सृञ्जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान्॥ हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः॥४२॥ मिश्रकेश्यामप्सरसि वृकादीन्वत्सकस्तथा॥ तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आदधे॥४३॥ सुमित्रार्जुनपालादीन् शमीकात्तु सुदामिनी॥ कङ्कश्च कर्णिकायां वै ऋतधामजयावपि॥४४॥ पौरवी रोहिणी भद्रा मदिरा रोचना इला॥ देवकीप्रमुखा आसन्पत्न्य आनकदुन्दुभेः॥४५॥ बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम्॥ वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत्॥४६॥ सुभद्रो भद्रबाहश्च दुर्मदो भद्र एव च॥ पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन्॥४७॥ नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः॥ कौशल्या केशिनं त्वेकमसूत कुलनन्दनम्॥४८॥ रोचनायामतो जाता हस्तहेमाङ्गदादयः॥ इलायामुरुवल्कादीन्यदुमुख्यानजीजनत्॥४९॥ विपृष्टो धृतदेवायामेक आनकदुन्दुभेः॥ शान्तिदेवात्मजा राजन् श्रमप्रतिश्रुतादयः॥५०॥

## कर्मकाण्डोपयोगी बातें—

१—प्रतिमां पिण्डिकां वापि कुण्डं मण्डपमेव च । तोरणं च ध्वजं चैव गुणाढ्यं पात्रमेव च ॥ मानहीनं न कर्तव्यं फलप्राप्त्यर्थिभिः सदा ॥ २—कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुः ॥ ३—कुशेन रहिता पूजा विफला कथिता मया । उदकेन विना पूजा विना दर्भेण या क्रिया । आज्येन च विना होमः फलं दास्यन्ति नैव ते ॥ ४—सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् । सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥ ५—कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये—इति हेमाद्रौ ब्रह्माण्डपुराणे दूर्वाया उपदिष्टत्वेनातिदिष्टानामृजुदर्भाणां बाध्यो माभूदित्येतदर्थमेवं दूर्वाया च ऋजुदर्भैर्विकल्पः, सोऽपि मङ्गलात्मकविवाहाद्यारम्भे क्रियमाणवृद्धिश्राद्धे कुशस्थाने दूर्वाविधिर्यज्ञाद्यारम्भे तु क्रियमाणेऽमूलऋजुदर्भविधिरित्येवं व्यवस्थापितम् । ६—नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोऽपि वा ॥ ७—शालिग्रामे सर्वेऽपि देवाः पूज्या इति शिष्टाः । प्रतिमादौ षडावृत्त्या पूजिते यत्फलं लभेत् । शालिग्रामेऽर्चिते देवेष्वेकावृत्त्यापि तल्लभेत् ॥ ८—हूयमाने हुताशे च यदि ज्वाला समुद्भवः । सिद्धिदो यजमानस्य ज्ञेयः प्रीतो मनीषिभिः ॥ सा ज्वाला यदि रक्ता स्यात्कृष्णा चैव विशेषतः । उदिता शत्रुभयदा ऋत्विजां नात्र संशयः ॥ वह्निः प्रदक्षिणावर्तः शशिखो धूम्रवर्जितः । स्निग्धः सुगन्धिर्गम्भीरश्चिरायुर्होतुरादिशेत् ॥ ९—देवद्रोण्यां विवाहेषु यज्ञेषु प्राकृतेषु च । काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत् ॥ वस्त्रधान्यादिराशीनामेकदेशस्य दूषणे । तावन्मात्रसमुद्धृत्य शेषं प्रोक्षणमर्हति ॥ घृतानां प्रोक्षणाच्छुद्धिः—इत्यादि ॥ १०—यवार्धं तण्डुलाः प्रोक्तास्तण्डुलार्धं तिलास्तथा । तिलार्धं शर्करा प्रोक्ता आज्यं भागचतुष्टयम् ॥ वेदभागतिलानां स्युर्भागोनास्तु यवाः स्मृताः । द्विभागं च घृतं प्रोक्तं भागमेकं तु तण्डुलाः ॥' यवाधिक्ये प्रजानाशः आज्याधिक्ये धनक्षयः ।' तिलास्तु द्विगुणाः प्रोक्ता यवेभ्यश्चैव सर्वदा । अन्ये सौगन्धिकाः स्निग्धाः गुग्गुलाद्या यवैस्समाः । सर्वकामसमृध्यर्थं तिलाधिक्यं सदैव हि ॥ ११—धर्मकार्यं महत्कार्यं यदीच्छेद्दशभिर्दिनैः । प्रायश्चित्तं यथावित्तं प्राककार्यं तेन शुद्धये ॥ 'गोहिरण्यादिदानं वा कृत्वा कर्म समाचरेत् ॥ १२—विद्यावृद्धान्वयोवृद्धान् गृहस्थान्संयतेन्द्रियान् । स्वकर्मनिरतान् शुद्धान् ज्ञानशीलान्प्रयत्नतः ॥ क्रोधलोभादयो दोषा वर्जनीयाः प्रयत्नतः ॥ १३—यस्मात् ग्रन्थाच्चातुरस्रादिकं कृतं तस्मादेव पद्ममादिकर्तव्यमिति नियमः । अथवा—यस्मात्पद्ममादिकं तस्मादेव चतुरस्रादिकं कार्यमित्यपि, किन्तु नामाकारसदृशस्य क्षेत्रफलस्य च नियमादेकस्मादेकमपरस्मादेकं कृतमपि दोषो नास्तीति सिद्धम् । अत एव कुण्डसिद्ध्यादेरष्टास्रादिकं कुण्डार्कादेः पद्ममादिकं याज्ञिकाः कुर्वन्ति ॥ १४—स्वयं कर्तुमशक्तश्चेत् ऋत्विग्भिः कर्मकारयेत् ॥ १५—वरणानन्तरं ऋत्विजे ज्वरादियुक्ते मृते वा तदा यजमानस्तत्स्थाने अन्यं वृत्वा कर्मणि योजयेत् ॥ १६—प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् । पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनाच्छुचिः ॥ १७—प्रवासे पथि वा मार्गे स्थानप्राप्तौ जलेऽपि वा । कारागारनिबद्धो वा प्रायो वेशगतोपि वा ॥ मनोभवे समुत्पन्ने सिंहव्याघ्रसमाकुले । परचक्रागमे चैव कुर्यान्मानसपूजनम् ।' अशुचिर्वा महामाया पूजां कुर्याच्च मानसीम् ॥ १८—विष्णुक्रान्ता सहदेवी तुलसी तु सतावरी । मूलानीमानि गृह्णीयाच्छतालाभे विशेषतः ॥ १९—न जातु दर्शयेन्मुद्रां महाजनसमागमे । देवास्तस्य न पश्यन्ति विफलं च कृतं भवेत् ॥ २०—अक्षतानर्कधत्तूरौ विष्णोर्नैवार्पयेत्सुधीः । अक्षतनिषेधः शालग्राम पर एव न तु मूर्त्याविति । २१—रोगेष्वापत्सु दोषेषु दुरसङ्गे दुर्निमित्तके । यथाकालो यथाश्रद्धा यथाद्रव्यं यथोचितम् । यथाबलं यथादेशस्तथापूजां समाचरेत् ॥ २२—प्रतिमासु शिलां बुद्धिं कुर्वाणो नरकं व्रजेत् । २३—होमकार्ये तथा दोहे पाके च परिवेषणे । पञ्चगव्याशने चैव ताम्रे गव्यं न दुष्यति-इति स्मृतिवचनं तल्लौकिकदोहविषय एव सङ्कटमात्राभ्यनुज्ञाविषयम् । एवं पाकपरिवेषणयोरपि । होमेऽत्र पञ्चगव्यस्यैव । अथवा सङ्कटविषयत्वमेव ॥ २४—आदौ वेदोदितैर्मन्त्रैरग्न्युत्तारणमाचरेत् । धातुनिर्मितचक्राणां मूर्तीनां च विशेषतः ॥ २५—शालिग्रामशिलायान्तु प्रतिष्ठा नैव

स्वर्गीय-महामहोपाध्याय-अस्मत्पितृचरण पं० विद्याधरशास्त्रिगौडस्मारक—

भारतीय-कर्मकाण्ड-मण्डल की ७५ पुष्पलता

(सप्तमस्कन्ध)

# श्रीमद्भागवत भाषाटीका

[ 'सरस्वती' भाषाटीका, दृष्टान्त और 'प्रकाश' टिप्पण से अलंकृत ]

सम्पादक—उत्तरप्रदेशीय सरकार द्वारा संमानित विद्वान् आचार्य मीमांसाशास्त्री, कर्मकाण्डशास्त्री, पौरोहित्यरत्न श्रीदौलतरामगौड वेदाचार्य

बम्बईप्रेस, राजादरवाजा, बनारस

शक्यते न हि । सत्स्वेव सन्निधातव्यः सन्तस्सङ्गस्य भेषजम् ॥ १२२ ॥ आयुषः क्षण एकोऽपि सर्वरत्नैर्न लभ्यते । तद् वृथा नीयते मर्त्यैः श्रीमद्भागवतं विना ॥ १२३ ॥ शक्तस्तच्छ्रुणुया-देकः संभूय चेतरे जनाः । यथा कथञ्चिच्छ्रवणं कर्तव्यं भुवि मानवैः ॥ १२४ ॥ चतुर्वर्गप्रदं शास्त्रं श्रीमद्भागवतं कलौ । शुश्रूषयापि लभते श्रीभागवतसेविनाम् । यद्यद्वाञ्छति लोकेऽस्मि-न्तत्तदेव न संशयः ॥ १२५ ॥ चतुःश्लोकी चतुर्वेदबीजभूता चतुर्मुखात् । वेदास्त एवाजायन्तां विष्णुनोक्ताः पुराहृदि ॥ १२६ ॥ विधातुरिति संश्चित्य सदाश्रेयं द्विजातिभिः । श्रीमद्भा-गवतं शास्त्रंविहायान्यद्भ्रमवहम् ॥ १२७ ॥ ब्रह्मवर्चस्विताऽवाप्त्यै गायत्री जप्यते यथा । तथेदमपि जप्तव्यं तद्रूपत्वाद् द्विजोत्तमैः ॥१२८॥ नारद उवाच–धन्योऽस्मि भगवन् विष्णो श्रावितं सुखकारणम् । सर्वेषां मानवानां च सुखसाध्यं त्वया यतः ॥१२९॥ नारायण उवाच–कृष्णप्रियं सकलकल्मषनाशनं च ज्ञानायनं परमहंसमुनिप्रियं च । श्रुत्वा प्रयाति सुरवृन्दनुतो मनुष्यो वैकुण्ठधाम शुकशास्त्र सुशीलनेन ॥ १३० ॥ नातः परं कृतिजबन्धविनाशकारि शास्त्रं यतो हरिरपि स्वयमेवचित्ते । ध्यातुः प्रविश्य स्थिरतामुदयाति शीघ्रं तेनेदमेव सततं परिशीलनी-यम् ॥ १३१ ॥ पुनः प्रोवाच भगवांश्शृणु नारद सुव्रत । यत्र भागवती गाथा सा भूमिस्तीर्थरूपिणी ॥ १३२ ॥ गङ्गा च सरस्वती रेवा यमुना च विपाशिका । शतद्रुः कृष्णावेणी च कौशिकी च दृषद्वती ॥ १३३ ॥ चन्द्रभागा वितस्ताद्या या नद्यस्सिन्धु सङ्गताः । नदाः सर्वे कुरुक्षेत्रप्रयागः पुलहाश्रमः ॥ १३४ ॥ सर्वे कुलाचलाः पुण्यः काशीद्वारवती तथा ॥ १३५ ॥ पुष्करं भार्गवक्षेत्रं सीतारामाश्रमास्तथा । पम्पासरो विन्दुसरस्तथा वृन्दावनं वनम् ॥ १३६ ॥ एतन्यन्यानि तीर्थानि सन्ति तत्र न संशयः । यत्र नित्यं भागवतं पुराणं वाच्यते मुने । तत्र नित्यं प्रयातृणामेवत्तीर्थफलं लभेत् ॥ १३७ ॥ पूजानिष्ठिद्रताऽवाप्त्य विष्णोर्भागवतं मुने । पुराणं वाचयेन्नित्यं तेन प्रीतो जनार्दनः ॥१३८॥ द्वात्रिंशदपराधांश्च क्षमते नात्र संशयः । श्रीकृष्णपूजा पूर्तिस्तु विना भागवतं न हि ॥ १३९ ॥ विनापि श्रीहरेः पूजां श्रीभागवतपाठतः । साङ्गपूजाफलं नित्यं जायते नात्र संशयः ॥ १४० ॥ व्यासासनोपविष्टस्तु विप्रो व्यासो न संशयः । गुरु-विप्रनृपैश्चापि वृद्धैः पितृपितामहैः । पूजनीया प्रयत्नेन तथा धर्मो न हीयते ॥ १४१ ॥ नो नमेचाऽशिवं चोद्यान्नाभ्युत्थानं तदासनात् । कुर्वीत च महाप्राज्ञ सर्वपूज्यस्तदा भवेत् ॥ १४२ ॥ शरीयात्रा कर्तव्या हविष्यान्ने न नारद । श्रोतृभिश्च तथा वक्ता वारमेकं दिने दिने ॥१४३॥ नित्यं भागवतश्रावो ब्रह्मयज्ञः प्रकीर्तितः । सर्वेषामेव यज्ञानां ब्रह्मयज्ञो मतोधिकः ॥ १४४ ॥ अस्थिराणि शरीराणि धनमायुस्तथाऽस्थिरम् । इति सञ्चित्यसततं कर्तव्यो धर्मसञ्चयः॥१४५॥स्वर्गादि फलदा धर्माः सर्वे प्रोक्ता पुरानघ । स्वसर्वेष्टप्रदो धर्मः श्रीमद्भागवतं श्रुतिः ॥१४६॥ कथाश्रावात्परो धर्मो न भूतो न भविष्यति ॥ १४७ ॥ श्रीकौशिकसंहितायां भागवतमाहात्म्ये षष्ठोऽध्यायः ॥ इति ॥

नरो विप्र वक्ता विष्णुर्यतः स्वयम् । मुख्यो गुरुर्बोधयिता धर्माणां सर्वतो ह्ययम् ॥८४॥ दुर्वाक्यं न वदेत्क्वापि व्यासं विष्णुस्वरूपिणम् । शयानाः पारभृत्वन्तो भवन्त्य जगराननाः ॥८५॥ असम्प्रणम्य शृण्वन्तो वृक्षत्वं यान्ति मानवाः। शास्त्रवक्तरि चायाते उत्थातव्यं पुरः स्थितैः ॥८६॥ वक्ता समं न चैवोच्चं श्रोतृणामासनं वरम् । समासनात्पुण्यहानिरुच्चाच्च निरयं व्रजेत् ॥८७॥ श्रोतव्यं मौनमाश्रित्य नरैर्नियतमानसैः । वाग्वादकरणाद्गाथा नीरसा जायतेतराम् ॥८८॥ कथा रसविघातेन पशुयोनिमवाप्नुयात् । कथायां संवृत्तायामितिसद्महापुराणयोः ॥ ८९ ॥ योऽन्यः किञ्चिदपि ब्रूते विना वक्तारमत्र हि । स वाग्वाद इति प्रोक्तः कथारसविघातकः ॥९०॥ वाग्वादात्स्यात्कथाभङ्गो ब्रह्महत्या समा हि सः । पृच्छेत्कथान्ते सन्देहं न कथायां कदाचन ॥ ९१ ॥ श्रोता जनः कथा भङ्ग भयान्मौनं समाश्रयेत् । पाद्मे पुराणे संप्रोक्तं शङ्करेण स्वयं द्विजाः ॥ ९२ ॥ वाग्देवता भवेत्क्रुद्धाकथाया भङ्गमात्रतः । तेन जन्मान्तरे मूकः पुनर्मूढश्चिजन्मसु ॥९३॥ वायसा वा भवेदन्यो वक्तुर्वक्ता ततो वदेत् । श्रोतुर्दानिमनन्त्याय वक्तुर्नैव प्रतिग्रहः ॥९४॥ श्लोकैकश्रवणे यस्य रत्नकोटि न निष्क्रिया । सर्वस्यतस्य या वक्ता प्रतिग्राही कथं हि सः ॥९५॥ आर्षं शास्त्रं सदा श्राव्यं यदि वेदानुगं भवेत् । अनार्षं तु बुधैर्नैव श्राव्यं वेदानुगं यदि ॥ ९६ ॥ आर्षं यदृषिभिः प्रोक्तमनार्षं स्यान्ततोऽन्यथा । कलौ तदेव शंसन्ति ऋषिभिर्भाषितं तु यत् । येषां वेदं कथाः प्रोक्तास्ते विप्रा ऋषय स्मृताः ॥ ९७ ॥ श्रीव्यासश्रीसंप्रोक्तं द्वादशादित्यसन्निभम् । श्रीमद्भागवतं लोके तमो हन्ति स्वसेविनाम् ॥ ९८ ॥ नित्यं भागवतं यस्तु पुराणं पठते नरः । प्रत्यक्षरं भवेत्तस्य कपिलादानजं फलम् ॥ ९९ ॥ यः पठेत्प्रयतो नित्यं श्लोकं श्लोकार्द्धमेव वा । शृणोति वा नरो भक्त्या गोसहस्रफलं लभेत् ॥ १०० ॥ येऽर्चयन्ति गृहे नित्यं शास्त्रं भागवतं कलौ । स्वर्गे प्रयान्ति पितरस्तेषां नैवात्र संशयः ॥ १०१ ॥ न यस्य तिष्ठते शास्त्रं गृहे भागवतं कलौ । स कथं वैष्णवो ज्ञेय इत्थं प्राह स्वयं शिवः । सन्ध्यावन्दनवन्नित्यं श्रोतव्यं वैष्णवैरिदम् ॥ १०२ ॥ सन्ध्याहीनो यथा विप्रो ह्यनर्हस्सर्वकर्मसु । वैष्णवोऽपि तथानर्हः श्रीमद्भागवतं विना ॥ १०३ ॥ विना दानैर्विना यागैर्विना विद्यार्चनादिभिः । श्रीमद्भागवतात्सर्वं वाञ्छितं लभते नरः ॥ १०४ ॥ कलौ नास्ति कलौ नास्ति श्रीमद्भागवतं विना । श्रेयसां निगमः श्रेष्ठो विद्यते जगतीतले ॥ १०५ ॥ सर्वान्धर्मान्परित्यज्य श्रीमद्भागवतं नरैः । सेवनीयं प्रयत्नेन न धर्मोऽस्ति ततः परः ॥ १०६ ॥ स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । सर्वदानानि दत्तानि सुराः सर्वे समर्चिताः ॥ १०७ ॥ श्रुतानि सर्वशास्त्राणि येन भागवतं श्रुतम् । ग्रहपीडा महामारी या पीडा प्रेतसम्भवा ॥ १०८ ॥ महारोगभवापीडा राजशत्रुभवा तथा । श्रीमद्भागवतश्रावाच्छ्यत्येव न संशयः ॥ १०९ ॥ ब्राह्मणो ब्रह्मवर्चस्वी क्षत्रियो विजयी भवेत् । वैश्योनिधिशतां याति शूद्रः शुध्यति पातकात् ॥ ११० ॥ अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च । श्रोतव्यमेव शूद्राणां नाध्येतव्यं कदाचन ॥ १११ ॥ श्रौतं स्मार्तं च वै धर्मं प्रोक्तमस्मिन्द्विजोत्तमम् । तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन ॥ ११२ ॥ द्विजान्योऽमन्त्रयागी चाम्लेच्छपरिणयां सदा । द्विजभक्तो भवेच्छूद्रस्तदन्यश्चान्त्यजादिकः ॥ ११३ ॥ श्रीमद्भागवतेनैव यस्य कालो नु गच्छति । जीवन्मुक्त स विज्ञेयो देहान्ते कृष्णरूपधृक् ॥ ११४ ॥ दाता श्रोता च वक्ता चाऽस्येताध्यापयिता च यः । गोलोकलीलां निर्विश्य ब्रह्मसायुज्यमाप्नुयात् ॥ ११५ ॥ तिरश्चामपि दृश्यन्ते मानुषाणां च केवलम् । भोगा भागवतप्राप्तिर्मानुषेभ्यो न चान्यतः ॥११६॥ श्रीमद्भागवतप्राप्तिर्महतां सङ्गतो भवेत् । महान्तो वैष्णवा एव यतो विष्णुपरायणाः ॥ ११७ ॥ महत्त्वं कारणं वक्ष्ये संवादं गुरुशुक्रयाः । सर्वस्मिन्निह कोज्यायान्गुरो पृथ्वीति चेच्छृणु ॥ ११८ ॥ पृथ्वीशेषधृता सशम्भुमुकुटे कैलासराशोऽप्यसौ कैलासोऽपि दशाननेन तुलितो बद्धोप्यसौ वालिना । वाली राघवविष्णुना युधिजितो विष्णुः सतं मानसे तस्माद्विष्णुपरायणादगुरुतरो नान्योऽस्ति लोकत्रये ॥ ११९ ॥ विधेयः सर्वदा सङ्गो वैष्णवैरेव नारद । श्रीभागवतप्राप्त्यर्थं सततं बुद्धिमत्तरैः ॥ १२० ॥ श्रीमद्भागवताद्भक्तिर्भक्तेर्ज्ञानं प्रजायते । ज्ञानान्मोक्षमवाप्नोति नेति वेदान्तडिण्डिमः ॥ १२१ ॥ सङ्गः सर्वात्मना त्याज्यस्चेत्यक्तुं

[illegible] एवं संक्षिपेत्सुधीः ॥४३॥ श्रीहंसाख्यानपर्यन्तं षष्ठे ह्निऽवाचयेद् ध्रुवम् । सप्तमे दिवसे कुर्याच्छ्रीभागवतपूरणम् ॥४४॥ पूजनं विविधैर्द्रव्यैः कुर्याद्वक्तुर्यथोदितम् । यात्रायां शुक-
देवस्य समाप्तौ शास्त्रपूजनम् ॥४५॥ मासश्रवणपक्षे तु नित्यमध्यायधूर्जटिम् । पञ्चाध्यायीं पठेद्विप्रान्समाप्तिदिवसेन्तिमाम् ॥४६॥ एकविंशाहकल्पे तु नित्यं षोडश षोडश । अध्यायान्संपठेद्धीमा-
नन्तिमे [illegible]न् ॥४७॥ अष्टादशाहयज्ञे तु सहस्रश्लोकवाचनम् । दिवसे दिवसे कुर्यादिति शास्ति स्वयं बुधः ॥४८॥ नन्देनन्दूत्वष्टचन्द्रौ गिरिशचलनौ शास्त्रभूर्नन्दचन्द्रौ रुद्राश्वाग्रे नखाश्च श्रुतिन-
यन[illegible]ताः शैलभूः शून्यनेत्रे । भूनेत्रे बाणचन्द्रौ श्रुतिदृशि समिताः काण्डभूर्भूवरक्ष्मे । दृक्पादौ गोब्जसंख्याः सहजचरणकाः सर्गसंख्यायथस्मात् ॥४९॥ पाठे श्लोकसहस्रस्य संख्येषु जायते
द्विज ! [illegible]ध्यायेष्वन्वहं पक्षे ह्यष्टादशदिनात्मके ॥५०॥ यद्वा दिक्तिथिनागाश्च भूदिनेऽध्यायविंशतिम् । अष्टादशाग्दिनेऽन्यत्र चैकविंशान्वदेपरे ॥५१॥ पक्षश्रवणपक्षे हि द्वाविंशाध्यायपाठनम् ।
नि[illegible] [illegible]कुर्वीत मासे सप्तविशातः ॥५२॥ यद्वा सर्वेषु कल्पेषु यथा वक्तुः सुखं भवेत् । तथैववाचनं मन्ये प्रशस्तं श्रोतुरेव वा ॥५३॥ नित्यश्रवे मुहूर्तं तु श्रवणं सुखदायकम् । विषाद-
श्चेन्न जायेत श[illegible]मनं श्रवणं हि तत् ॥५४॥ अभक्ष्यभक्षणं त्याज्यमसंभाष्येण भाषणम् । अस्पृश्यस्पर्शनं चैव ब्रह्मचर्यपरो भवेत् ॥ ५५ ॥ क्रोधं लोभं च निन्दां च क्रीडामद्यादिभिः सह ।
श्रोता चैव तथा वक्ता सन्त्यजेत्स्थिरमानसः ॥५६॥ ततस्तु श्रवणारम्भे पुस्तकार्चनमारभेत् । पुष्पैर्धूपैश्च नैवेद्यैस्तथा नीराजनादिभिः ॥ ५७ ॥ ततः श्रीफलमादाय नमस्कारं समाचरेत् ।
श्रीमद्भागवताख्यत्वं [illegible]त्यक्षः कृष्ण एव हि ॥५८॥ स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे । मनोरथो मदीयोऽयं पूरणीयस्त्वया प्रभो ॥ ५९ ॥ गृहीत्वा पुष्पमालादि वक्तारं पूजयेत्ततः ।
सर्वज्ञ सर्वधर्मज्ञ शु[illegible]रूप नमोऽस्तु ते ॥६०॥ एतत्कथाप्रकाशेन मदज्ञानं विनाशय । श्रद्धान्वितः सर्वकृत्यं विहाय श्रवणं चरेत् ॥ ६१ ॥ श्रद्धां विना कर्मफलं न जायेत कदाचन । विना
वह्नि यथा[illegible]ततः श्रद्धान्वितो भवेत् ॥ ६२ ॥ अश्रद्धया कृतं पुण्यं निष्फलं स्यान्नसंशयः । प्रसादतुलसीमाला दीयतां श्रवणार्थिनाम् ॥६३॥ कथान्ते हवनं कार्यं गायत्र्या त्वयुतं बुधैः ।
न्यूनत्वपरिहारार्थं पठेन्नामसहस्रकम् ॥ ६४ ॥ तेन स्यात्सफलं सर्वं नात्र कार्या विचारणा । ब्राह्मणान्भोजयेद्भक्त्या परमान्नेन शक्तितः ॥६५॥ शक्तोऽस्य दानं कुर्वीत महादानविधानतः ।
महस्रै[illegible]निष्कैश्च [illegible] न वा पुनः ॥ ६६ ॥ चतुर्विंशतिनिष्कैर्वाथ वा द्वादशभिः पलैः । यद्वा पलत्रयेणापि कृत्वा सिंहासनं वरम् ॥६७॥ तन्मध्ये स्थापयेच्छास्त्रं रौप्यपट्टिकमध्यगम् ।
क्षौमाम्बरसमा[illegible]वर्चितं चन्दनादिभिः ॥ ६८ ॥ सम्पूज्य विप्रं विधिवद्वेदवेदाङ्गपारगम् । तद्व्याख्यानरतं शान्तं विष्णुभक्तिपरायणम् ॥ ६९ ॥ स्थालीपाकविधानेन होमं कुर्वीत
य[illegible]तः । [illegible] पूजयित्वा कु[illegible] ॥ ७० ॥ गोदानफलमाप्नोति श्रोता प्रत्यक्षरं नरः । अध्यायेनाश्वमेधस्य स्कन्धेनानन्तयागजम् ॥ ७१ ॥ समग्रश्रवणेनैव जीवन्मुक्तो भवे-
[illegible] धनस्य यत्फलं प्रोक्तं दाने तद्द्विगुणं भवेत् ॥ ७२ ॥ लिखित्वा लेखयित्वा वा दद्याद्भागवतं नरः । प्रोष्ठपद्यां पौर्णमास्यां कार्तिक्यादिषु वा पुनः ॥ ७३ ॥ दाता फलमवाप्नोति सर्व-
पोरा[illegible]जम् । श्रोता लभेत मोक्षं पाठादिनिरतो यदि ॥ ७४ ॥ सर्वान्कामानवाप्नोति दाता भागवतस्य च । पुस्तकं वृत्तिहेतुत्वाद्देयं विप्राय मानवैः ॥ ७५ ॥ विप्रस्य वृत्तिकरणात्कोटि-
गोदानजं फलम् । विप्र[illegible] वृत्तिहननात्पापं गोकोटिघातजम् ॥ ७६ ॥ कृष्णरूपमिदं शास्त्रं संशयो न हि विद्यते । अत आदरतः सव्यं श्रीमद्भागवत नरैः ॥ ७७ ॥ वक्तारं तोषयद्भक्त्या
वस्त्राभरणधेनुभिः । [illegible]तथा यानैरत्नैः शय्यागृहादिभिः ॥ ७८ ॥ फलं वक्तरि तुष्टे स्यात्तथा प्रीतिर्हरेर्द्विजे । प्रीते हरौ किमप्राप्य जगतामीश्वर परे ॥ ७९ ॥ वक्तारं च पुराणादर्दया
वृत्तिस्तु कौलिकी । वक्तुर्जीवितपर्यन्ताऽथ वा वात्सरिकी बुधैः ॥ ८० ॥ गाधाकालमिताऽवश्यं वस्त्राभावासरूपिणी । पूर्वाभाव पराकार्या श्रवणं तां विना मुधा ॥ ८१ ॥ पारायणे जपं तीर्थे
निजान्त फलदं म[illegible]म् । असामर्थ्येपि संभूय वस्त्रान्नादिदिशेत्सुधीः ॥ ८२ ॥ पेयं पूयं मलं भक्ष्यं भूपास्थिकृत्तिचाम्बरम् । तस्यानप्येह यो वक्त्रे पुराणादनिजान्तिके ॥ ८३ ॥ सदा भुंक्ते

[illegible] नि: ॥ २ ॥ राजसं [illegible] चापि तामसं निर्गुणं तथा । सेवतं चास्य कर्त्तव्यं जनिसाफल्यहेतवे ॥ ३ ॥ परीक्षित्शुकसम्वादो योऽसौ व्यासेन वर्णितः । ग्रन्थोऽष्टादशसा-[illegible] ॥ ४ ॥ हयग्रीवब्रह्मविद्यायुक्तो ब्रह्मप्रबोधकः । उपक्रमावसाने रतो गायत्र्या यस्य सत्तम ॥ ५ ॥ संसारतापहरणः सोऽयं भागवताभिधः । पृष्ट्वा मुहूर्तं दैवज्ञाद्यदा श्रद्धा [illegible] ॥ ६ कार्तिकादिषु मासेषु तदा श्राव्या समाहितैः । मलमासं च शुक्रास्तं तथास्तं गुरुचन्द्रयोः ॥७॥ गुर्वादित्यं क्षयतिथिं सर्वथा परिवर्जयेत् । विरक्ता वैष्णवास्तत्र तथा ये [illegible] ॥ ८ ॥ [illegible]दिना [illegible]तथान्ये श्रवणोत्सुकाः स्थलं । तु विस्तृतं कार्यं गाथार्थं रुचिरं नृभिः ॥ ९ ॥ नान्दीश्राद्धं विधायादौ मण्डपं कारयेच्छुभम् । कदलीखण्डरचितं [illegible] सहायतः ॥ १० ॥ स्थापनीयाश्चतुर्दिक्षु कुम्भाः श्रीफलसंयुताः । गणेशाग्रहमातृश्चाचार्यान्परीक्षिकांस्तथा ॥ ११ ॥ प्रत्यहं पूजयेद्वक्ता श्रोता चापि यथाविधि । शालग्रामशिलावस्थ-[illegible] तत्र संसदि ॥ १२ ॥ पलसौवर्णं नितं विष्णुं कुम्भोपरि न्यसेत् । पञ्च सप्त त्रयो विप्रा जपेयुर्वेदमातरम् ॥ १३ ॥ गायत्रीं वा गणेशस्याथवा द्वादशवर्णिकम् । कथाविघ्नविघातार्थं यद्वा मृत्युञ्जयं जपेत् ॥१४॥ उपक्रमेऽवसाने च कुर्यान्नीराजनं मुदा । महोत्सवः प्रकर्त्तव्यो यथोद्वाहादिकर्मणि ॥१५॥ निष्कत्रयसुवर्णेन प्रत्येकस्कन्धपूजनम् । महापूजा समाप्तौ स्याद्वित्तशाठ्यं न [illegible]येत् ॥ १६ ॥ अरुणोदय उत्थाय शौचं स्नानादिकं चरेत् । वक्ता चात्र प्रकर्त्तव्यो विप्रः शास्त्रविशारदः ॥ १७ ॥ रागद्वेषविनिर्मुक्तो सर्वाङ्गपरिपूरितः । दृष्टान्तकुशलो धीरो न पाख-[illegible] न हेतुकः ॥ १८ ॥ अवैष्णवमुखाद्गाथा न श्रोतव्या कदाचन । शुकशास्त्रं विशेषेण न श्रोतव्यमवैष्णवात् ॥१९॥ वैष्णवोऽत्र स विज्ञेयो विष्णोर्मुखमिष्यते । ब्राह्मणोऽस्य मुखमिति [illegible] एव सः ॥ २० ॥ विप्रतरमुखाच्छास्त्रं श्रुतं हि नरकप्रदम् । शूद्रस्तु सर्वथा त्याज्यः शास्त्रालापे नरोत्तमैः ॥२१॥ श्वचर्मणि यथा गव्यमपेयं स्याद्द्विजातिभिः । तथा शूद्रमुखाद्वा-[illegible]र्थं न श्रोतव्यं कदाचन ॥२२॥ कपिलाक्षीरपानेन ब्राह्मणीगमनेन वा । शालग्रामशिलास्पर्शाद्वेदस्योच्चारणात्तथा । व्यासासनोपवेशाच्च शूद्रश्चाण्डालतां व्रजेत् ॥ २३ ॥ ये शूद्रमुखतः शास्त्रं शृण्वन्ति हि नराधमः तेषां [illegible] त्रपुः सिक्त्वा वक्तुर्जिह्वां प्रकर्त्तयेत् ॥ २४ ॥ विज्ञो राजा स्वराजस्य तथा वंशस्य चात्मनः । समृद्धयेऽन्यथा याति नरकान्सुदारुणान् ॥२५॥ विप्रस्यैवाधिकारोऽस्ति धर्मशास्त्रोपदेशने । व्यासासनसमावेशे नान्यवर्णस्य भार्गव ॥ २६ ॥ विप्रा विप्रेतरगुरुरविप्रो जायते ध्रुवम् । न स विप्रेषु पूजार्हस्तस्माद्विप्रं गुरुं चरेत् ॥२७॥ गोत्रप्र-वरत्यागेऽपि [illegible] नश्यति ध्रुवम् । विप्रेतरगुरोर्जाति[illegible] मन्त्रादेरपि नश्यति ॥ २८ ॥ मज्जंश्च सर्वतीर्थेषु तथार्चन्सर्वदेवताः । हृषीकाणि निगृह्णंश्च नाविप्रः पूज्यतां व्रजेत् ॥ २९ ॥ अतो विप्रं हि वक्तारं कुर्याच्छास्त्रस्य बुद्धिमान् । द्विजान्त्यो मन्त्रत्यागी चाम्लेच्छः परिणाया सदा ॥३०॥ द्विजभक्तो भवेच्छूद्रस्तदन्यश्चान्त्यजादिकः । गणकं भिषजं चैव तथा वार्धुषिकं द्विजम् ॥ ३१ ॥ राजमुद्राङ्कितं देवमुद्राचिह्नितविग्रहम् ।❀ मातृतः पितृतश्चाथाऽशुद्धं देवलकं तथा ॥३२॥ राजभृत्यं च पतितं तथा कटुकभाषिणम् । तथोर्ध्वपुण्ड्ररहितं वक्तारं न प्रकल्पयेत् । अद्विजाधीत-शास्त्रं च परपाकरतं तथा ॥३३॥ वरणे व्यासपूजायां श्राद्धे राज्यासने तथा । उद्र्ध्वपुण्ड्रं प्रकुर्वीत न कुर्याद्वै त्रिपुण्ड्रकम् ॥३४॥ आज्ञामादाय विप्रेभ्यो वृद्धेभ्योऽन्येभ्य एवं च । उप-विश्यासने विद्वान्पाठोच्चारणमारभेत् । पाठः शनैः शनैः कुर्याच्छ्रोतृहर्षविवर्द्धनम् ॥३५॥ गीती शीघ्री शिरः कम्पी तथालिखितपाठकाः । अनर्थज्ञोल्पकण्ठश्च षडेते पाठकाऽधमाः ॥ ३६ ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः । धैर्यं लयसमर्थश्च षडेते पाठकोत्तमाः ॥३७॥ पाठं कुर्वंश्च विरमेद्यावदध्यायपूरणम् । विरामे च तदध्यायं पुनरादित आरभेत् ॥३८॥ स्कन्धस्या-द्यन्तश्लोकौ हि द्विरावृत्या सदा पठेत् ॥३९॥ शौनक उवाच—कस्मिन्दिने कियान्कार्यः पाठस्य नियमं वद । सप्ताहादिषु सर्वेषु कल्पेषु बुद्धिसत्तम ॥ ४० ॥ सूत उवाच—सप्ताहे पाठनि-यमं शृणु शौनकसंयतः । मनुकर्दमसंवादपर्यन्तं प्रथमेऽहनि ॥४१॥ ऋषभाख्यानपर्यन्तं द्वितीये दिवसे वदेत् । तृतीये दिवसे कुर्यात्सप्तमस्कन्धपूरणम् ॥४२॥ कृष्णाविर्भावपर्यन्तं चतुर्थेऽहनि वाचयेत् ।

इहैव दश्यतां देव मुनिः प्राह शिवं तदा ॥ २४ ॥ अदृष्ट्वा पुनरावृत्तो हरः स्वाश्रमनेव हि ॥ २५ ॥ कदाचिन्मथतो वीर्यमरण्यामपतन्मुने । बालस्तदैव सञ्जातो ह्यभूत्षोडशवार्षिकः ॥ २६ ॥ तदैवोत्थायविपिनं जगामैकल एव सः । उच्चार्य पुत्र पुत्रेति व्यासोऽप्यनु जगाम ह ॥२७॥ निवर्तस्वेहि पुत्र त्वं कुरु मे सुमनोरथम् । गृहमावस मे तात भुक्त्वा भोगान्यथेप्सितम् ॥२८॥ ततस्त्याज्यं गेहयोगं प्रवदन्ति मनीषिणः । निशम्य पितुर्वाक्यं वृक्षसंघे निलीय च ॥ २९ ॥ उवाच पितरं तात शृणु कश्चिन्नराधिपः । वैश्यासक्तमना वेश्यागेहमायाति प्रत्यहम् ॥ ३० ॥ मया विना कश्चिदन्यो न सेव्यः पुरुषोऽपरः । पुरुषान्तरं सेवसे चेत्तदा सत्यं मरिष्यसि ॥ ३१ ॥ तं चापि मारयिष्यामि यश्च मां त्वां रमयिष्यति । एव मुक्त्वा समायाति स राजा निज-मन्दिरम् ॥ ३२ ॥ केनापि श्रेष्ठिपुत्रेण सा वेश्या ह्यतिसुन्दरी । दत्वा बहुधनं तस्यै प्रार्थिता रतिकर्मणि ॥ ३३ ॥ लोभासक्तमना वेश्या रेमे वैश्यसुतेन सा । रतिकाले नृपः प्राप्तो द्वार-मुद्राख्यतां शुदे ॥ ३४ ॥ त्रस्ता सा प्राह तं वैश्यं किं कुर्वे भयमागतम् । त्वां मां चैव नृपोऽवश्यं मारयिष्यति साम्प्रतम् ॥ ३५ ॥ मलोत्सर्गगृहं हित्वाऽधुना शुचि गृहं न हि । अधोमुखं चास्य रन्ध्रे रज्ज्वा बद्धा निपातये ॥ ३६ ॥ प्रयास्यति यदा राजोद्धरिष्योऽहं ततः परम् । च स मृत्यु भयात्पत्रोरो चकार तथा कृतम् ॥ ३७ ॥ यावन्निशं नृपो रेमे जगामोषसि वेश्मनि । स च वैश्य सुतो रात्रिं यापयामास दुःखितः ॥ ३८ ॥ अधोमुखः गलासक्तशिराः प्रोत्फुल्ललोचनः । तयोद्धृतो निजगृहमागत्योवाच पापिनम् ॥ ३९ ॥ धिङ् मां विगर्हितं सद्भिर्न न कुर्वे मुनवीदृशान् । वेश्यया दूतिकास्येन समाहूतः पुनः पुनः ॥ ४० ॥ धनिपुत्रो यथा वेश्यागेहं नैव प्रयासि सः त्वया रमिष्ये निर्मूल्यमेहि त्वं मे गृहं मनः ॥४१॥ गर्भवासे तथा दुःखं दशमासं यथानिशि । एकयामेव ददृशे वेश्यागेहे विशांपतिः ॥ ४२ ॥ अतो गृहं नैव यास्ये गर्भवासफलम् । इति श्रुत्वा मुनिः कृष्णो विरहाकुलमानसः ॥ ४३ ॥ कथं निवर्तये पुत्रं विरक्तं सुन्दराकृतिम् । ततो योगबलेनैव दृष्ट्वा भागवतस्मृतिम् ॥ ४४ ॥ पुत्रस्यपूर्वसंस्काराव्यासः श्लोकान्पपाठ ह । श्रीमद्भागवतस्यैव दशस्तकन्धसम्भवान् ॥ ४५ ॥ श्रुत्वा पूर्वं श्रुतांश्लोकांस्त्य-क्तकीरवपुर्गतिः । हरेर्गुणा क्षिप्तमतिर्बादरायणनन्दनः ॥ ४६ ॥ तमोवानुजगामाथ हर्षितः कृष्णलीलया । आगत्य श्रीभागवतमध्यैष्ट पितुरात्मनः ॥ ४७ ॥ छायाशुकं विनिर्माय तत्रै दत्वा ततोऽभ्यगात् । अनग्निश्चानिकेतश्च पूर्वनाम्ना चकार ह ॥ ४८ ॥ शुकाख्येन मुने लोके स्मरन्भागवतं मुदा यदा शमीकतनयः शापं शृङ्गी ददौ रुषा ॥ ४९ ॥ राज्ञे परीक्षिते विप्रस्तदायाद्यो-गिनाम्वर । गङ्गातीरेपविष्टाय त्यक्तराज्याय सत्तमः ॥ ५० ॥ वक्तुं भागवतं शास्त्रं सद्यश्चित्तप्रसादकम् । यच्छ्रुत्वा कृष्ण सायुज्यमभिमन्यु सुतो नृपः । ऋषीणां पश्यतामेव लेभे व्याससुता न्मुने ॥ ५१ ॥ सूत उवाच—अहं तत्र निविष्टश्च श्रुतवान्मुनिसत्तमः । श्रीमद्भागवतं प्रियाः सर्वेष्टफलदायकम् । तत्प्रभृत्येव लोकेऽस्मिन्नविर्भूतं न संशयः ॥ ५२ ॥ भाशब्दः कीर्तिवचनो गशब्दो ज्ञानवाचकः । सर्वेष्टवचनो वश्च तो विस्तारस्य वाचकः ॥ ५३ ॥ कीर्तेर्ज्ञानस्य सर्वेष्टस्य च विस्तारणादिदम् । अस्य भागवतं नाम श्रीव्यासेनेति कीर्तितम् ॥ ५४ ॥ धर्मार्थकाममो-क्षांश्च वक्तिवर्णचतुष्टयी । ते प्राप्यन्ते यतोऽनेन तस्माद्भागवतं स्मृतम् ॥ ५५ ॥ कृष्णस्य वाङ्मयीमूर्तिः श्रीमद्भागवतं मुने उपदिश्योद्धवं कृष्णः प्रविष्टोऽभिन्नसंख्यायाः ॥ ५६ ॥ पदादिजा-नुपर्यन्तप्रथमस्कन्ध ईरितः । तदूर्ध्वं कटिपर्यन्तं द्वितीयस्कन्ध उच्यते ॥ ५७ ॥ तृतीयो नाभिरित्युक्तश्चतुर्थ उदरं मतम् पंचमो हृदयं प्रोक्तं षष्ठः कण्ठं सबाहुकम् ॥ ५८ ॥ सर्वलक्षणसंयुक्तं सप्तमो मुखमुच्यते । अष्टमश्चक्षुषी कृष्णोः कपोलौ भ्रुकुटिः परः ॥ ५९ ॥ दशमो ब्रह्मरन्ध्रं च मन एकादशः स्मृतः । आत्मा तु द्वादशस्कन्धः श्रीकृष्णस्य प्रकीर्तितः ॥ ६० ॥ जीवन्मुक्तो न सन्देहो जायते श्रुतिमात्रतः तस्मादेषा सदा श्राव्या श्रीभगवती कथा ॥ ६१ ॥ इति श्रीशौनक संहितायां भागवतमाहात्म्ये पंचमोऽध्यायः ।

शौनक उवाच—सूत महाप्राज्ञ वह्निकुण्डसमुद्भव । श्रीमद्भागवतश्रावविधिं ब्रूहि दयानिधे ॥ १ ॥ सूत उवाच—भारते लब्धजनुषां नृणां भागवतश्रवे । विधिं वक्ष्याम्यहं विप्रा

भवेदेव न सन्देहः प्रायश्चित्तं न तत्परम् । कृत्वा समाजं विदुषां शृणु सर्वार्थसिद्धिदम् ॥ ५१ ॥ इति श्रुत्वा नृपः प्राह कथमेतद् भविष्यति । न चास्ति मे धनं किञ्चिद्येन मे नहि साधकः । त्वमेव कल्पो मे देव तारणे दुःखवारिधेः ॥ ५२ । श्रीनारायण उवाच–स चापि कृपया विप्रः कृत्वा संघं सतां तदा । दिनैश्च पञ्चदशभिः प्राह भागवतं मुदा ॥ ५३ ॥ श्रुत्वा भागवतं राजा प्राप दत्तं महाबलम् । हरिणा देवदेवेन गतो विप्रनियोगतः ॥ ५४ ॥ भिल्लान्सन्ताड्य संप्राप निजां भार्यां यशोवतीम् । यैर्गृहीतं पुरं तस्य तेषां स्वप्नो ह्यभून्निशि ॥ ५५ ॥ श्वः प्रातः पलायध्वमायातीह द्विजोत्तमः । वरविक्रमसंयुक्तः सर्वान् वो मारयिष्यति । परमेश्वरानुगृहीतं तं न जेष्यथ संहता ॥ ५६ ॥ रमाकान्तप्रसादेन निर्वृतो बलवत्तमः । भवेदेव न सन्देहो यथा नागराजो यथा ॥ ५७ ॥ तस्यामेव निशि स्वप्ने तात निःसरणं पुरात् । निजाच्छत्रुगणानां शुश्राव श्रीविष्णुनोदितः ॥ ५८ ॥ द्विजोत्तम नृपश्रेष्ठ गच्छ तात निजं पुरम् । अयं तव प्रभावोऽस्ति श्रीमद्भागवतश्रवात् ॥ ५९ ॥ गतास्ते शत्रवः सर्वे भुंक्ष्व राज्यं यथाविधि । प्रातरुत्थाय ते सर्वे द्विजोत्तमविरोधिनः ॥ ६० ॥ स्वं स्वं स्थानमुपाजग्मु भीताः स्वप्नप्रदर्शनात् । द्विजोत्तमं चापि ययुः श्रुत्वा मन्त्रिपुरोहिताः ॥ ६१ ॥ सर्वे भृत्यगणाः पौरा आनयामासुरानताः । राज्ये तं स्थापयामासुः सपत्नीकं समागतम् ॥६२॥ स्ववृत्तं कथयामास श्रीमद्भागवतोद्भवम् । श्रुत्वा विसिस्मियुः सर्वे वृत्तं नृप सुखोद्भवम् ॥६३॥ ग्रामे ग्रामे महाराजः श्रीमद्भागवतीं कथाम् । कारयामास सततं श्रीकृष्णप्रीतिकारिणीम् ॥६४॥ यावज्जीवं सशुश्राव स्थिरचित्तो द्विजोत्तमः । श्रीमद्भागवतं राजा सर्वमन्त्रिगणावृतः । देहान्ते वैष्णवं धाम प्राप भागवतस्मृतेः ॥ ६५ ॥ इति श्रीकौशिकसंहितायां भागवतमाहात्म्ये चतुर्थोऽध्यायः ।

नारद उवाच–नारायणमहेशान कथितं परमाद्भुतम् । श्रीभागवतमाहात्म्यं श्रीमता पुरुषोत्तम ॥ १ ॥ कथं भागवतं लोके प्रवृत्तं तद्वदस्व मे ॥२॥ नारायण उवाच–शृणु नारद यत्नेन यत्पृष्टं तत्त्वयाऽनघ । रहस्यं ते प्रवक्ष्यामि तव भक्त्यासुयन्त्रितः ॥ ३ ॥ पार्वत्यै कथयामास पुरा काश्मीरमण्डले । महेशोऽमरगाथां यामभृतत्वप्रदायिनीम् ॥ ४ ॥ तामेव ते प्रकर्षेण सुरर्षे कथयाम्यहम् ॥ श्रद्धाऽमृतकथायां मे श्रीकृष्णोक्तिप्रमाणतः ॥ ५ ॥ श्रीमद्भागवतं शास्त्रममराख्या कथा स्मृता । रुद्रस्कन्धोनविंशे चाध्याये कृष्णेन भाषितम् ॥ उद्धवाय सुहृदे नात्र कार्या विचारणा ॥ ६ ॥ एकदा गिरिजा शम्भुं स्तुत्वा बहुविधे मुने । उवाचावनताचैव देव देव जगत्पते ॥ ७ ॥ त्वद्वियुक्ता यथा न स्यामात्मप्राप्तिश्च मे यथा । तथा कथय देवेश कृपया भक्तवत्सल ॥ ८ ॥ इति श्रुत्वा महादेवः प्राह पत्नीमिदं वचः । गुप्तो न शृणुयात्कश्चिद्बहिर्गत्वा विलोक्यताम् ॥ ९ ॥ इत्युक्ता बहिरागत्य किञ्चिन्नात्र न पश्यति । स्थावरं जङ्गमं चापि कीराण्डं गलितं विना । उवाचावनतागत्य बहिः किञ्चिन्न विद्यते ॥ १० ॥ ततोऽमरकथां शम्भुः श्रीमद्भागवताभिधाम् । महेशान्यै विधायादौ समयं च जगाद ह ॥ ११ ॥ क्षणे क्षणे त्वमीशानि ओमित्युच्चारणं यदि । करिष्यति तदा वक्ष्ये कथाममृतरूपिणीम् ॥ १२ ॥ तथेति स्वीकृतं देव्या शम्भूक्तं वचनं तदा । प्रथमस्कन्धतः शम्भुः कथयामास पूरितः ॥ १३ ॥ प्रेम्णा शैलसुतायै स्ववल्लभायै परां कथाम् । दशमस्कन्धपर्यन्तमोमोंशब्दं जगाद ह ॥ १४ ॥ एकादशारम्भकाले निद्रयोपद्रुता सती । सुष्वाप च तदा कीरस्तं ध्वनिं च तथाऽकरोत् ॥ १५ ॥ श्रीभागवतपीयूषसंयोगाज्जीवितस्तदा । द्वादशान्ते प्रबुद्धा सा पुनः प्रोवाच सङ्करम् ॥१६॥ किंभुताचोद्धवं कृष्णो भगवन्न मया श्रुतम् । निद्रायोगात्पुनर्ब्रूहि कृपा कृत्वा ममोपरि ॥१७॥ कोऽस्त्रोङ्कार प्रवक्तास्ति न कोऽपि प्राह पार्वती । उत्थाय च महादेवोऽपश्यत्परमसुन्दरम् ॥१८॥ शुकशावं तदा क्रुद्धः प्राह शैलसुतां हरः। कथं त्वया न दृष्टोऽयं शुकभावो वदाऽशुभे ॥१९॥ भगवन्गलितं चाण्डं जीवहीनमिहास्ति वै । पूर्वदृष्टं मयाज्ञातं मृतस्तु काष्ठलोष्टवत् ॥२०॥ श्रीभागवतपीयूषसेकाज्जीवमवाप्तवान् । अधुना देवदेवेश माक्रोधं कुरु शङ्करः ॥२१॥ शुकं गृहीतुं भगवान्दुद्राव बहुवेगतः । उड्डीय च शुकोऽथ विदूरतो व्यासाश्रमं ततः ॥ २२ ॥ द्वैपायनस्य च मुखे जृम्भमाणस्य वेगतः । शुकोविवेश सम्भीतो द्रावितः शङ्करेण हि ॥ २३ । आगत्य धूर्जटिः प्राह क्व गतस्तीक्ष्णनासिकः ।

न्लगेहेषु राजपत्न्य वशाद्बलात् ॥ १० राजापि त्रिदिनं गच्छन्न लेकेऽन्नजलं वने । ततो रम्यनदीतीरे ददर्श सनकं मुनिम् ॥ ११ ॥ शिष्यवृन्दपरीवारं चतुर्मुखमिव स्थितम् । सप्रश्रयावनो राजा दण्डवत्प्रणनाम ह ॥ १२ ॥ पप्रच्छ मुनिशार्दूलः सनकः को भवानिति । निवेदयामास तदा नृपोऽहं राज्यविश्रुतः ॥ १३ ॥ व्यसनासक्तचित्तत्वात्पौरैर्निर्वासितः पुरात् । भार्या मे क गता विप्र न जाने सा मृता वने ॥ १४ ॥ क्षुत्पिपासार्दितोऽरण्ये विचरामि स्वकर्मणा । दिनत्रयं चाद्य जातं निरन्नस्य मुने मम ॥ १५ ॥ वद त्वं कृपया साधो किं मया सञ्चितं पुरा । भूतं भविष्यमृषयो वर्तमानं विदुर्गुरो ॥ १६ ॥ दैवाधीनं जगत्सर्वं मन्त्राधीनाश्च देवताः । विप्राधीना मन्त्रगणा देवदेवास्ततो द्विजाः ॥ १७ ॥ मृदुलं किन्नु वस्तु हे मुने नवनीतादपि सज्जनस्य हृत् । तदिदं द्रवते स्वतापनात्परतापाद्रवते सतां मनः ॥ १८ ॥ इत्युक्तः सनको विप्र उवाच—ज्ञाततत्कृतः ॥ १९ ॥ ऋषिरुवाच—आसीद्राजा धर्मानधिर्विराजनगरे पुरा । सर्वदेवगणानां स मन्दिराणि व्यधापयत् ॥ २० ॥ तद्वृत्तिं कारयामास क्षेत्रग्रामापणैर्दृढाम् । त्वमपि न्यवसस्तत्र ब्राह्मणः पूर्वजन्मनि ॥ २१ ॥ विद्वान्मन्त्रगणं सर्वं स्वाध्यायाध्ययनेरतः । नृपेण धर्मनिधिना दत्तं तुभ्यमशेषतः ॥ मठापत्यत्वमित्युक्त्वा देवद्रव्यं द्विजोत्तमः ॥ २२ ॥ दीनानाथमयार्तेभ्यो ब्राह्मणेभ्यो विशेषतः । विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ २३ ॥ देवद्रव्यं प्रमादेन यो नाशयति मानवः । स याति नरकं घोरं यावदाभूतसंप्लवम् ॥२४॥ यो नरो देवताद्रव्ये सत्वमारोपयेद् हठात् । स चौर एव विज्ञेयो दण्डः स्याच्चौरवद् भृशम् ॥२५॥ इत्थं प्रबोध्य सनृपस्त्वां देवगृहमानयत् । त्वया प्रमादमासाद्य स्वं वपुः परिपोषितम् ॥ २६ ॥ न दत्तं विप्रमुख्येभ्यो नातिथिभ्यश्च धर्मतः । व्यसनैर्नाशयामास देवद्रव्यं भुजोद्भवः ॥ २७ ॥ कदाचिदपि देवस्य विधिना नाऽकृतार्चनम् । आयुषान्ते यमः प्राह त्वामेनं नयतद्रुतम् ॥ २८ ॥ कुम्भीपाके तथा लालाभक्षे शोणितकर्दमे । वैतरण्यां बहुचिरं देवद्रव्यविरोधिनम् ॥ २९ ॥ ब्राह्मणयहारिणां पापं दृताः मन्ताद्यतां तथा । तदन्ते विड्भुजां देहं प्रापयोर्ध्वंसहस्रशः ॥३०॥ ऋषिरुवाच—त्वयेत्थं बहुशो भुक्ता नरकस्थेन यातनाः । श्वशृगालखरोष्ट्राणां वराहाणां तथैव च ॥३१॥ जन्मानि प्राप्य क्षत्रत्वं नृपतित्वं च बाहुज । प्राप्तं यदधुना तच्च रोगार्तद्विजसेवनात् ॥ ३२ ॥ ततः पूर्वतरे देहे कृतादेव न संशयः । त्वया प्रणाशितमहो ब्राह्मण्यं देवदुर्लभम् । विप्रत्वं बहुपुण्येन साम्राज्यं त्वल्पपुण्यतः ॥ ३३ ॥ नृप उवाच— कथं ब्राह्मणता नष्टा भवेन्मे वद सुव्रत । शास्त्रेषु श्रूयते लोके ब्राह्मणेभ्यो न चोत्तमाः ॥ ३४ ॥ कोऽपि देही कथं तिष्ठेद् ब्राह्मणो मुनिसत्तमः । इत्युक्तः कथयामास शृणु बाहुजसत्तम ॥ ३५ ॥ वेदानभ्यसनाद् द्रोहात्परेषां गुरुनिन्दया । मद्यमांसाशनैश्चापि शूद्रसेवनतस्तथा ॥ ३६ ॥ वाणिज्येन कुसीदेन धूमपानेन वा तथा । यमसुद्रा धारणेन यवनीमैथुनेन च ॥ ३७ ॥ अद्विजातपठने नैव परपाकस्य भोजनात् । पाखण्डमार्गोपादानान्निन्दनाद्विप्रशास्त्रयोः ॥ ३८ ॥ रेतःसेकाद् गुदायां च पतितानां च सङ्गमात् । मातापित्रोः कुलं त्यक्त्वा चान्यस्यां तीर्थेषु यापनात् ॥ ३९ ॥ ब्राह्मण्यं नाशमायाति सीरकर्षणतस्तथा । ऊर्ध्ववस्त्रादधोवस्त्रात्पतितेभ्यः परिग्रहात् ॥ ४० ॥ ब्रह्मविष्ण्वीशदेवेषु भेदबुद्धेः प्रकल्पनात् । शूद्राध्यापनतस्तर्काच्छास्त्रीयेषु च वस्तुषु ॥ ४१ ॥ सन्ध्याकर्मपरित्यागाच्छूद्रान्न भुजितस्तथा । मध्याजीवनतश्चैव सङ्गृत्तेः परिग्रहात् ॥ ४२ ॥ देवलत्वेन च तथा याचकत्वेन वा तथा । ग्रामयाचनवृत्तेश्च धावकत्वपरिग्रहात् ॥ ४३ ॥ चिकित्सागणिताभ्यां वा जीवनाद्वा वृथाहठात् । मनुष्यवाङ्निर्मितस्य ग्रन्थस्याध्ययनश्रुतेः ॥ ४४ ॥ प्रतिग्रहमुपादाय न जपेद्वेदमातरम् । स चेद्वै ब्राह्मणत्वं विहाय शूद्रतामियात् ॥ ४५ ॥ संस्काराणां परित्यागादसन्तोषान्नृपोक्तितः । अथाज्ययाजनाच्चैव वेदविक्रयणात्तथा । ४६ ॥ पौराहित्यान्नृपान्नाच्च तथा घोरप्रतिग्रहात् । ब्राह्मण्यं नश्यति यथा साधुभावः कुसङ्गमात् ॥ ४७ ॥ शमी दमी तितिक्षुश्च गायत्रीजपतत्परः । ब्राह्मणो देवपूज्यः स्यान्मनुष्याणां च का कथा ॥ ४८ ॥ नृप उवाच—कथं मे स्यात्सुखमिह कृपया वद सांप्रतम । सतां साप्तपदी मैत्री भवत्येन द्विजोत्तम । ४९ ॥ ऋषिरुवाच—शृणु भागवतं यत्नो भूत्वा पक्षेण बाहुज । श्रद्धया परया राजंस्ततरते दुःखसंचयः ॥ ५० ॥

दुष्टापि गोर्यथा दोह्या न गंगास्नायिनी खरी। सर्वतीर्थपरिस्नातः सर्वदेवकृतार्चनः। पूताचारप्रवृत्तोऽपि नाविप्रो विप्रतां लभेत् ॥ १७ ॥ विप्राशितमिहाश्नन्ति देवताः पितरस्तथा। अतः सर्वाग्र भोक्तारो विप्रा एव न चेतरे ॥ १८ ॥ स्वमेव ब्राह्मणो भुंक्ते स्वं वस्ते स्वं ददाति च। तस्यैवानुग्रहेणान्ये भुञ्जते क्षत्रियादयः ॥ १९ ॥ विप्रदत्तेषु लोकेषु गताः पूर्वे नरोत्तमाः। अतो मामुद्धर मुने दुस्तराद्रोगवारिधेः ॥ २० ॥ श्रुत्वार्तवचनं विप्रः प्रणिदध्यौ ततोऽब्रवीत्। त्वं बभूविथ भो रोगिन् विप्र एवाथनीवृति। मद्राह्वये कुसङ्गेषु संसर्गं मानसं च ते ॥ २१ ॥ पाखण्डानुगतो भूत्वा वेदनिन्दां चकार ह। सेतिहासपुराणानां तथाऽभूः कुत्सने रतः ॥ २२ ॥ पाखण्डिकल्पितैस्तर्कैर्न स्वर्गोऽस्ति न देवताः। विप्रैर्वरचिता ग्रन्थाः स्वीयपूजादिहेतवे ॥ २३ ॥ तैः सर्वे वञ्चिता लोका मूढा इत्येवमादिभिः। मनुष्यवाचारचितान्मत्वो ग्रन्थांश्च नित्यशः ॥२४॥ तेन दापप्रभावेण जातकुष्ठो गलद्वपुः। वेदो निःश्वसितं विष्णोर्निःश्वासं प्राण उच्यते ॥२५॥ स्मृतयश्च पुराणानि सेतिहासानि तद्वपुः। वेदनिन्दसमं तापं न भूतं न भविष्यति। न तेन सङ्गतिं कुर्याच्च संभाषेत तेन वा ॥ २६ ॥ पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः। याम्यपाशाक्षिप्तिस्तु तेषां नैव कदाचन ॥ २७ ॥ ज्ञातं मया त्वया भुक्ता यातना यमकारिताः। काकाद्यनेकनिर्यस्ते देहा आसंस्ततः परम् । २८॥ इदं त्वलब्धवान्देहं कुष्ठैरष्टादशान्वितैः। मनसा कर्मणा वाचा पापं नैव समाचरेत् ॥ २९ ॥ पापाचरणवेलायां न जानाति मदाकुलः। भोगकाले ततो वक्ति धिङ्मां पापप्रकारिणम् ॥ ३० ॥ अतस्त्वमष्टादशभिर्दिवसैः स्थिरमानसः। शृणु भागवतं शास्त्रं वैयासिकिसमीरितम्। ३१ ॥ विपापो भविता तेन तथोल्लाघो भविष्यति। श्रुत्वा मुनिवचः प्राह को मे वक्ता भविष्यति ॥ ३२ ॥ दूरं गच्छेति मनुजः सर्वे मां प्रवदन्ति हि। अतस्त्वमेव दयया शास्त्रं भागवतं मुने। श्रावयस्व दिनैरष्टदिक्संख्यासंयुतैर्द्विज ॥३३॥ दानेन पाणिर्न कङ्कणेन श्रोत्रं श्रुते नैव न कुण्डलेन। विभाति कायः करुणापराणां परोपकारेण न चन्दनेन ॥ ३४ । तच्छ्रुत्वा श्रोत्रियान्विप्रा नानाय्य श्रवणाय सः। तं पापं दूरतः स्थाप्य कथां भागवतीं जगौ ॥ ३५ ॥ बभूव दिव्यदेहोऽसौ क्षत्रियोऽष्टादशे दिने। अहोज्ञानमहोज्ञानमहोगुरुरहो गुरुः ॥ ३६ ॥ येनेदृशः पापतमो मोचितेति शशंस ह। कथाश्रवान्तेऽरूपा वाग्बभूव शृण्वतां सताम् ॥ ३७ ॥ यः श्रोष्यते भागवतीमष्टादशदिनैः कथम्। स ब्रह्म यास्यति प्रेत्य भुक्त्वा भोगांस्तथैहिकान्। ३८ ॥ इति श्रुत्वा प्रमुदिता ये च तत्र समागताः। श्लाघयन्तो गतास्सर्वे क्षत्रियोऽपि द्विजाज्ञया ॥३९॥ स्वग्राममगमद्रात्रौ सुष्वाप बहिरेव सः। तस्यां रात्रौ पुराधीशो मृतिमापानपत्यक ॥ ४० ॥ तन्मन्त्रिणां विमर्शोऽभून्नृपः कोऽत्र भविष्यति। यः प्रातः प्रथमं द्वारमायाति स नृपो भवेत् ॥ ४१ ॥ इत्थं जाते च समये स प्राप्तो मन्त्रिभिस्तदा। राज्यासने निवेशासौ प्रजा धर्मेण पालयन् ॥ ४२ ॥ स स्वदेशे भागवतीं कारयामास वै कथाम्। अन्ते प्राप परं धाम श्रीमद्भागवतं स्मरन् ॥ ४३ ॥ श्रीकौशिकसंहितायां भागवतमाहात्म्येऽष्टादशदिनश्रवणफलवर्णनं नाम तृतीयोऽध्यायः।

शौनक उवाच—सूत सूत कथां ब्रूहि श्रीमद्भागवतीं पुनः। पञ्चभिर्दिवसैः केन श्रुता दशयुतैर्वद ॥ १ ॥ सूत उवाच—पुरा बभूव नृपतिः कान्यकुब्जे द्विजोत्तमः। नीतिमार्गपरित्यागी बहुधा कामचारिभिः ॥ २ ॥ अमात्यैः संयुतो राज्यं शशास बहुवार्षिकम्। बभूव तस्य राजानो वैरिणोन्ये मुने पुरा ॥ ३ ॥ तैस्तस्य चाभूत्प्रधानं तुमुलं लोमहर्षणम्। पराजितो गतोऽरण्यं द्विजोत्तम नराधिपः ॥ ४ ॥ सभार्यो दुःखितोऽरण्ये क्षुधया पीडितो भृशम्। सुप्तां राज्ञीं परीत्यज्य गतो राजा यशोवतीम् ॥ ५ ॥ वनान्तरं विवेशासौ सिंहव्याघ्रादिभिर्युतम्। प्रातः प्रबुद्धा सा राज्ञी न पश्यन्ति प्रियं ततः ॥ ६ ॥ आरण्यकैर्निषादाद्यैर्लब्धा विपिनमध्यगा। निषादाजगृहू राज्ञीमानिन्युश्च निजं गृहम् ॥ ७ ॥ तत्र सा चानयत्कालं विधुरा दुःखजीविता। अहो विधातः किमिदं यत्कदापि न चिन्तितम् ॥ ८ ॥ कथं मे जीवनं चात्र निर्दयेषु प्रियं विना। कथं स्यात्पतिसंयोगो दुर्लभः प्रतिभाति मे ॥ ९ ॥ इत्थं विचारमापन्नास्मरन्ती पौर्विकं कृतम्। न्यवसद्धि

तम् ॥३९॥ अतस्त्वया महत्पापं कृतं दम्भधृतेः पुरा । ते शिष्या निखिला जग्मुरज्ञानाद् गुणधारणात् ॥ ४० ॥ नरकान्क्रमशो वैश्य कुम्भीपाकमुखान्बहून् । एकमेव प्रपश्यामि तव पापविशोधनम् ॥ ४१ ॥ एकविंशदिनेवेश्य श्रीभागवतसेवनम् । तत्कुरुष्व समाजेन तीर्थं वाथ वने गृहे । साधूनां विनतो भूत्वा ततः प्राप्स्यपि चेप्सितम् ॥४२॥ वैश्य उवाच—भगवन्मे दरिद्रस्य वक्ता कोऽपि न जायते । परोपकृतये यूयं ब्राह्मणा निर्मिता द्विजाः ॥ ४३ ॥ पिबन्ति नद्यः स्वयमेव नाम्भः खादन्ति न स्वादुफलानि वृक्षाः । अम्भोधरोवर्षति नात्महेतोः परोपकाराय सतां विभूतयः ॥ ४४ ॥ इति श्रुत्वा दयायुक्तो बभूव मुनिसत्तमः । उवाच खलु गङ्गायास्तीर्थे कुब्जाम्रकेऽधुना ॥ ४५ ॥ गाथां प्रवर्तयिष्यामो मुनिवृन्दं समाह्वये । इत्युक्तो प्रेषयामास ह्यानेतुं मुनिपुङ्गवान् ॥ ४६ ॥ शिष्यान्सर्वान्समाहूयाऽनेवाव ऋषिसत्तमाः । श्रीमद्भागवतस्यैकविंशतिदिनैर्मुदा ॥ ४७ ॥ सात्त्विकं सेवनं विप्रा गङ्गातीरे भविष्यति । तत्कथामृतपानाय गच्छ त्वं मुनिपुंगवाः ॥ ४८ ॥ ततो मुनीन्समादाय शिष्या आपेतुराश्रमम् । ततो जगाम मुनिभिर्मुनिः सांख्यायनो वरम् ॥ ४९ ॥ कुब्जाम्रकं महाक्षेत्रं तत्र गाथास्थलं महत् । कारयामास विप्रेन्द्र श्रोतॄन्सर्वान्यथोचितम् ॥ ५० ॥ निवेश्य कथयामास श्रीमद्भागवतं परम् । द्वादशस्कन्धसंयुक्तमष्टादशसहस्रकम् ॥ ५१ ॥ तं वैश्यं संमुखीकृत्य स्थिरचित्तो द्विजाज्ञया । रूपाद्विदिवसैरेव मुनिमण्डलमध्यगः ॥ ५२ ॥ कथासमाप्तावपतत्पुष्पवृष्टिर्दिवश्च्युता । ततो जय जयाराव ऋषिवृन्दैः समीरितः ॥ ५३ ॥ न च वैश्यो बभाराशु परमां श्रियमानतः । ऋषिभिः प्रेषितः प्रागाद् गृहमात्मन एव तत् ॥ ५४ ॥ स्ववृत्तं कथयामास भार्यायै पूरितो मुदा । सापि दर्भं दधाराशु मुदिता प्रियसंश्रयात् ॥ ५५ ॥ सन्तापेन गृहं तस्य पपात निखिलं ततः । स शुशोच ततो वैश्यो मृदश्चालनतत्परः ॥ ५६ ॥ कुड्यमूलावपातार्थं चखानश्रमताडितः । ततो दीनारनिचयैः संभृतान्बहुसंख्यकान् ॥ ५७ ॥ निपानवापविप्रेन्द्र तान्निशाम्य मुमोद ह । तेन द्रव्येण बहुधा स्वयामास मन्दिरम् ॥ ५८ ॥ कुसीद ग्रहणार्थं स ददौ बह्वीर्हिरण्यजाः इष्टपूर्तादिकं धर्मं स चकार द्विजाज्ञया ॥ ५९ ॥ एकसमान्तराले तु पुत्रं प्राप सुशोभनम् । देशान्तरे गीतकीर्तिर्जातो भागवतश्रवात् ॥ ६० ॥ सर्वरागविनिर्मुक्तश्चिरजीवित्वमाप सः । देहान्ते वैष्णवं धाम सुरासुरनमस्कृतम् । जगाम सविमानेनानीतेन वैष्णवैर्मुदा ॥ ६१ ॥ इति श्रीकौशिकसंहितायां भागवतमाहात्म्य एकविंशतिदिनकथाश्रवणफलनिरूपणं नाम द्वितीयोऽध्यायः ।

शौनक उवाच—परमामृतपानेन तृप्तिर्जायेत मे न वै । अतोष्टादशगं यागं ब्रूहि मे वदतां वर ॥१॥ सूत उवाच—क्षत्रियो मध्यदेशेऽभूद्राजसिंहोपनामकः । मातापित्रोर्मृतिं प्राप बाल्य एव आत्मनः ॥ २ ॥ दययामालितो बालो यमितिपार्श्ववर्तिभिः ॥ यौवने कुष्ठरोगेण पीडितो निर्गतो गृहात् ॥ ३ ॥ अष्टादशविधेनैव रोगी देशान्तरे गतः । विन्ध्याद्रिनिकटेऽरण्यं ददर्श बहुपादपैः ॥४॥ मत्तषट्पदसङ्गीतैर्मत्तकोकिलनिस्वनैः । मृगैर्वराहैः श्वाविद्भिर्गवयैः सैरिभैरिभैः ॥५॥ जुष्टं तस्मिन्बहुविधानाश्रमान्यत्र संवृतान् । तत्रैव याचनावृत्तिमाश्रित्योवास बाहुजः ॥ ६ ॥ भारद्वाजाश्रमं यातः कदाचिद् वनोदितः । तं गलद्वपुषं दृष्ट्वा पप्रच्छ कृपया मुनिः ॥ ७ ॥ कोऽसि कुतः समायातः कथमागमनं त्विह । इत्युक्तः स जगादेदं क्षत्रियोऽस्मि द्विजोत्तम ॥ ८ ॥ बन्धुहीनो रुजाग्रस्तो विचरामि यतस्ततः ॥ न मां सम्भाषते कश्चित्सर्वो वक्तेति गम्यताम् ॥९॥ न जाने किं कृत पूर्वं येनेयमागता दशा । मे मृत्युर्न समायातिधिग्गुणार्तस्य जीवनम् ॥१०॥ ईदृशो नहि मे रोगो जनगोष्ठ्यां यथा विशे । ब्राह्मणा भूमिदेवाः स्थ जानीथ निखिलं कृतम् ॥११॥ तपसा शास्त्रदृष्ट्या वा ब्राह्मणा जगदीश्वराः । इयं ब्राह्मणनौर्विप्र विपरीता भवार्णवे ॥१२॥ तरत्न्यधोगता यस्यामङ्गन्त्युपरिवर्तिनः । सर्वे देवाश्च पितरो ब्राह्मणैर्दर्शिता भुवि ॥ १३ ॥ न ब्राह्मणस्य समतां कश्चिदायाति मानवः । ब्राह्मणार्थे स्वयं विष्णुरवतारान्बिभर्ति वै ॥ १४ ॥ जिष्णुर्वर्णति विप्रार्थे विप्रार्थं तपसे रविः । विप्रावमन्तृन्नविजो बहुधा दण्डताडनैः ॥ १५ ॥ नियच्छतीह सर्वेषां विप्र एव गुरुर्मतः ॥ विप्रः पूज्योस्त्यनाचारो न च शूद्रो जितेन्द्रियः ॥ १६ ॥

नुत्तम् ॥३५॥ तत्प्रभुमागतो देवं तवान्ति सुखदायक। तद् ब्रूहि सुगमोपायं सर्वपापविनाशनम्। सुसाध्यं मानवैर्देव धर्मवृद्धिर्यतोऽनिशम् ॥३६॥ इति श्रीकौशिकसंहितायां भा०म०ना०सं०।

नारायण उवाच—शृणु नारद यत्नेन वदामि हितकारकम्। सर्वेषामेव वर्णानामाश्रमाणां विशेषतः ॥१॥ आसीत्पूर्वयुगे वैश्या नेपालनगरे सुधीः। वृत्तिहीनोः कष्टदीनः सखीकः पुत्रवर्जितः ॥२॥ यद्धर्मं संकुरुते स सुधा जायतेऽखिलः॥ तत्पत्नी हरितादेवी पेषणाद्यं चकार ह ॥ ३ ॥ तल्लब्धैनैव चान्नेन वृत्तिं चक्रतुरात्मनः। दम्पतीस्नेहरहितौ गर्हमाणौ स्वमुत्तम-न ॥ ४ ॥ व्याधिभिर्विविधैश्चोभौ पीड्यमानौ स्वकर्मतः। आस्तां नगरमध्ये तु कदाचिन्निर्गतः सुधीः ॥ ५ ॥ विहाय हरितां भार्यां जगाम विषमं वनम्। विचरन्स वने वैश्यो ददर्श सर उत्तमम् ॥ ६ ॥ तत्समीपे बहुविधानाश्रमान्मुनिसेवितान्। तन्मध्ये सर्वतः श्रेष्ठं कुट्यां सांख्यायनं मुनिम् ॥ ७ ॥ ब्रह्मतेजः समायुक्तं बहुशिष्योपशोभितम्। साक्षात्पद्मासनमिव बद्धाञ्जलि-पूर्वतः ॥ ८ ॥ तं प्रणम्य तत्समीपे विवेश च तदाज्ञया। सपृष्टस्तेन कस्त्वं भो हेतुश्चागमनेत्र कः ॥ ९ ॥ सर्वं ब्रूहि यथातत्त्वं का जातिस्तव सुव्रत। इत्युक्तो मुनिना वैश्यः स्वाभिप्रायं जगाद ह ॥ १० ॥ भगवन् किं न विदितं तपोज्ञानसमधिना। वैश्योऽहं शृणु भो ब्रह्मन्, विज्ञप्तिं मे कृपानिधे ॥११॥ धनसन्ततिहीनोऽहं बहुरोगप्रपीडितः। तप्तोऽस्मि बहुधा विप्रभर्तुमाम-मनं मम। १२॥ न जीवने सुखं पश्याम्यत्र सर्वविगर्हितः। किं मया सञ्चितं पूर्वं येनैषा मे दरिद्रता ॥१३॥ भगवन्कृपया ब्रूहि दीनं शरणागतम्। यत्फलं दीनदययानतत्कर्तुमिराप्यते ॥१४॥ इत्यावेदितहार्दाय सांख्यायन उवाच ह। शृणु वैश्यपुरावृत्तं स्वकीयं दुःखहेतुकम् ॥१५॥ शूद्रजातिस्तुद्भूयो वेदाभ्यास पुराकरोत्। विप्रायित्वा स्वमात्मानं काश्यां नाम्ना समूलकः ॥ १६ ॥ अभ्यस्य सद्शास्त्राणि भिक्षुवेषं चकार ह। विप्याश्चकारं बहुशो विप्राचानाविधान्द्विज ॥१७॥ उच्छिष्टं भक्षयामास सर्वान् शिष्यान्मदोद्धतः। उच्छिष्टमार्जनं चापि पादसंवाहनं तथा ॥१८॥ विप्रैस्त्वं कारयामास शिष्यैर्भूतैर्हठाद् बहु। कदाचिद्दैवतो मृत्युरागतो विट्पतेस्तव ॥ १९ ॥ गतो भूर्धर्मराजस्य पुरं दुःखेन पीडितः। सशिष्यस्त्वं ततो वैश्य बहुधा दुःखमाप्नुयि ॥ २० ॥ उच्छिष्टं ग्राहयेद्विप्रं मोहात्स्नेहात् हठाच्चयः। सर्वाग्रभोजिन मूढो लालाभक्षं प्रयाति सः ॥२१॥ शारीरिकमलान्भुङ्क्ते यावदाभूतसंप्लवम्। यो हीनश्चोत्तमं वर्णं शिष्यत्वे विनियोजयेत् ॥२२॥ स शूद्रःदुःखं याति ताड्यमानो यमानुगैः। वर्षवर्षसहस्राणि भुक्त्वा नरकयातनाः ॥२३॥ शौकरीं गार्दभीं योनिं बहुशोवाप वैश्यज। चाण्डालजातौ बहुधा जातस्त्वं निजकर्मणा ॥ २४ ॥ केनचित्पुण्यशेषेण जातो वैश्यगृहे सुधीः। धनधान्यसुतैर्हीनो व्याधिभिः कृतवेश्मभूः ॥ २५ ॥ अधुना कुरु भो वैश्य ! निष्कृतिं पूर्वकर्मणः। तेन त्वं चैहिकान्भोगान्भुक्त्वान्ते प्राप्स्यसे सुखम् ॥ २६ ॥ इत्युक्तोऽवनतो वैश्य उवाच मुनिसत्तम। यथाहमाप्नुयां विप्र सुखं तव प्रसादतः। प्रायश्चित्तमतो ब्रूहि कर्तुं शक्यं च यन्मया ॥ २७ ॥ ऋषिरुवाच—प्रायश्चित्तं न पश्यामि ज्ञात्वा वृजिनकारिणः। ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ॥ २८ ॥ आत्मोद्धारकताशक्तिः परोद्धारकता तथा। शक्ती द्वे ईश रचिते स्वोद्धारो सर्वसंस्थिता ॥ २९ ॥ परोद्धारा न सर्वत्र वैश्य हे ब्राह्मणं विना। विप्रन्द्वे एव वर्त्तेत तस्माद्विप्रो गुरुर्भवेत् ॥३०॥ अतः सर्वं कृतं विप्रैर्जपहोमार्चनादिकम्। लभते सर्वलोकोऽयं नान्यजाति कृतं क्वचित् ॥३१॥ अलाभे विदुषो विप्र जातिमात्रपरिग्रहः। अतो विप्रः सर्वपूज्यः सर्वदा सुखहेतवे ॥ ३२ ॥ नाविप्रो विप्रपूज्यस्त्वं प्राप्नोति वैश्यकर्हिचित्। इदं त्वया ज्ञातमेव शास्त्रे वेदे तथैव च ॥ ३३ ॥ किञ्चेदमपि जानासि न विप्रः शूद्रपूजकः। विप्रस्यैव प्रव्रज्यास्ति नान्यवर्णस्य कर्हिचित् ॥३४ आचार्यत्वं ब्राह्मणस्य स्थापितं पद्मयोनिना। नान्यवर्णस्य जायेत तत्र आदिभिरत्रतत् ॥३५॥ नहि जातिपराधृनिश्चिह्नमात्रपरिग्रहात्। न नापितो ब्राह्मणतां याति सूत्रादिसङ्ग्रहात् ॥ ३६ ॥ कलौ ब्राह्मणता वीर्यात्तवश्रयो दिना न हि। शुद्धं स्वशुद्धतामेत्य शोधनाच्छुध्यते पुनः ॥३७॥ यच्च स्वभावतोऽशुद्धं तन्न शुध्यति शोधनात्। यथा भस्मादिसंसर्गादशुद्धं तैजसं शुचि ॥ ३८ ॥ शुद्धं न शुद्धिमाप्नोति गङ्गाम्भः स्नावनादपि। न दम्भसदृशं पापं न पुण्यं सत्यसंमि-

## ❀ कौशिकसंहितोक्तं श्रीभागवतमाहात्म्यम् ❀

शौनक उवान—सप्ताहे तु महान्विद्वन्नायासो वर्णितोऽधुना । अल्पायासां कथां ब्रूहि श्रीमद्भागवतीं पुनः ॥ १ ॥ सूत उवाच—नमस्कृत्य प्रवक्ष्यामि गुरुं वैयासिकिं मुनिम् । मध्यमायासिकीं गाथां श्रीनारायणवर्णिताम्॥२॥ यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव । पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥२॥ शौनक उवाच—संसारेऽस्मिन्न प्रजतानां नृणां त्वं वदताम्बर । अज्ञानतिमिरान्धानां ज्ञानचक्षुः प्रदायकः ॥ ४ ॥ ऐहिकामुष्मिकसुखं येन स्यात्तद्वदस्व मे । केऽस्मिन्वृथा जन्मभाजः साफल्यं जनुषः कथम् ॥ ५ ॥ सूत उवाच—यैर्नश्रुतं भागवतं पुराणं नाराधितो यैः पुरुषःपुराणः । हुतं मुखेनैव धराऽमराणां तेषां वृथाजन्मगतं नराणाम् ॥ ६ ॥ शृण्वन्ति ये भागवतं पुराणं तथार्चयन्ते पुरुषं पुराणम् । सदैव विप्राश्वप्रदा नरा ये तेषां जनुः स्यात्सफलं ❀समग्रम् ॥७॥ ऐहिकामुष्मिकसुखं श्रीमद्भागवतश्रुतेः । सात्विकयाश्च भवेद्विप्रा भक्तिश्रद्धापुरस्सरम् ॥ ८ ॥ शौनक उवाच—श्रीमद्भागवतं कीदृक्कथं कस्मात्प्रभूत ह ॥ किं प्रमाणं किं ~रितं सात्विकं श्रवणं कथम् । एतद् ब्रूहि दयासिन्धो सूत सौम्य सुनिश्चितम् ॥ ९ ॥ सूत उवाच—उदधेः संप्लवे पूर्वं यदा शेते जनार्दनः ॥ तदा तन्नाभिकलादात्मभूः संबभूव ह ॥ १० ॥ स एकः शोकमापेदे कथं स्रक्ष्याम्यहं प्रजाः ॥ तदा भगवता तस्मै नियोगस्तपसे कृतः ॥ ११ ॥ तताप स बहुसमास्तेन तुष्टो हरिर्ददौ ॥ श्रीमद्भागवतं तस्मै वेदश्लोकात्मकं शुभम् ॥ १२ ॥ तद्विचारात्स चावाप सर्वसामर्थ्यमात्मनि । ब्रह्मा कञ्चिन्नदाय स्वसुताय महात्मने ॥ १३ ॥ तद्वृद्धये जगादाथ स च व्यासाय सन्ददौ । विखिन्नचेतसे तीरे सरस्वत्या द्विजोत्तम ॥ १४ ॥ व्यासः पुत्राय प्रोवाच विस्तार्य श्रीशुकाय वै । निवृत्तिनिरतो राज्ञे स जगाद परीक्षिते ॥ १५ ॥ श्रीमद्भागवतं लोके इत्थमाविर्बभूव ह । लक्षणं शृणु विप्रर्षे पुरा भगवतोदितम् ॥ १६ ॥ गरुडाय स्वाहाय पृच्छते प्रणताय च । गायत्रीभाष्यभूतोऽसौ वेदार्थपरिबृंहितः ॥ १७ ॥ अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । पुराणानां सामरूपः साक्षाद् भगवतोदितः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ॥ १८ ॥ सद्वीजः प्रणवाङ्कुरो रविमितस्कन्धैर्युतः कल्पवृट् पञ्चत्रित्रिमिताः खखाग्रवसुभूः शाखाप्रशाखास्तथा ॥ शून्याकाशखषड्गिरीपु समिताः पत्राणि यस्य स्फुटं स श्रीभागवताह्व इष्टफलदो भक्त्युत्थितो राजते ॥ १९ ॥ स्कन्धेषु सर्वेषु गतां ब्रुवेऽहमध्यायसंख्यां शृणुत द्विजेन्द्राः । एकोनविंशदशरामरामास्तथैवत्रिंशद्मनेत्रसंख्याः ॥ २० ॥ नन्देन्दुसंख्याशरचन्द्रसम्मिताश्चतुर्द्वयं चाग्रिमके तथैव । खनन्दसंख्याविधुवह्निसंख्या अध्यायसंख्याः क्रमतस्त्रिरूपाः ॥ २१ ॥ एतस्य श्रवणं प्रोक्तं चतुर्द्धा मुनिसत्तमैः ॥ सात्विकं राजसं चैव तामसं निर्गुणं तथा ॥ २२ ॥ सप्ताहं राजसं प्रोक्तं तामसं सालसं तु यत् । सात्विकं त्वेकविंशाहं तथैवाष्टादशाहकम् ॥ २३ ॥ अथवा पञ्चदशाहं चानियतं निर्गुणं स्मृतम् । राजसे त्वर्थसङ्कोचस्तामसे स्मृतिविभ्रमः ॥ २४ ॥ सात्विकं सुखबोधाय निर्गुणं सर्वतो वरम् । सात्विकश्रवणेनैव बहवो लेभिरे सुखम् ॥ २५ ॥ इत्युक्तवन्तं सूतं तु प्रोवाच मुनिसत्तमः । के के सुखं परं प्रापुः सात्विकश्रुतितो वद ॥२६॥ सूत उवाच—कदाचिन्नारदो योगी पर्वतं गन्धमादनम् । द्विजवेदरवैर्घुष्टं बहुनिर्झरशोभितम् ॥२७॥ गङ्गाप्रपातनिनदं सुरासुरसमर्चितम् । जगाम मुनिशार्दूलो द्रष्टुं नारायणं मुनिम् ॥ २८ ॥ तत्र गत्वा ददर्शाथ नरं नारायणं तथा । नमस्कृत्य विवेशाग्रे विनीतः प्रियदर्शनः ॥ २९ ॥ तं दृष्ट्वा भगवान्प्राह कथनोत्सुकमानसम् । ब्रूहि नारदवृत्तान्तं लोकानां खलु सर्वतः ॥ ३० ॥ किं वृत्तयः किमाचाराः किं धर्मा मानवा भुवि । यथा दृष्टं तथा ब्रूहि कथामागमनं तव ॥ ३१ ॥ नारद उवाच—लोका विधर्मनिरताः शुष्कवैराः सुदुर्मदाः। शिश्नोदरपरा जाताः सर्वे वर्णाः सुरोत्तम ॥ ३२ ॥ चौर्यानृतवृथाहिंसा वृत्तयोः धर्मदूषकाः । मांसाशिनो मद्यरता वेदहीना द्विजातयः ॥३३॥ कलहेन वै यापयन्तिपर्वोत्सवदिनं वृथा । स्त्रैणाश्च निन्दकाः सन्ति सर्वधर्मबहिष्कृता ॥ ३४ ॥ दृष्ट्वा तान्मलिनान्सर्वांश्चिन्तैषामे समागता । कथमेषामयत्नेन भवेद्भूपयतः

## श्रवण–महात्म्यम्—

श्रवण-माहात्म्य—हरिरुवाच—ब्राह्मणीगमने पापं पद्मस्य श्रवणे न हि । द्विबाहुकण्ठरूपस्य मम नश्यति यद् भवेत् ॥१॥ शृणु ब्रह्मन्नितीहासं कल्याणस्य प्रदायकम् । कदाचिद्देवराजो हि धृत्वा रूपमथौतुकम् ॥ २ ॥ अहल्यां गोतममुनेर्भार्यां प्राप विमोहितः । विलोक्य तं मुनिवरो महेन्द्रं शप्तवांस्तदा ॥ ३ ॥ येन त्वं जाररूपेण ह्यागतो मम मन्दिरम् । अतः शक्रशरीरे ते भगानां च सहस्रकम् ॥ ४ ॥ सदनं प्राथ शक्रः स्वं मुमोह च रुरोद च । ततो जगाम तपसे वनं वर्षसहस्रकम् ॥ ५ ॥ ततो वृत्रसमाक्रान्ता देवा मां शरणं ययुः । मया प्रोक्ता हि देवा यत्रेन्द्रस्तत्र गच्छत ॥ ६ ॥ मया सह महाभागाः स च वृत्रं वधिष्यत । तत्र गत्वाहमवचं वरं ब्रूहि पुरन्दर ॥७॥ पुरन्दर उवाच—ब्राह्मणीकृतसङ्गाच्च प्रपन्नोऽहं जनार्दन । तत्पापं मे यथा यातु तथा त्वं स माधव । तथा भगसहस्रं मे शरीरस्थं विनाशय ॥ ८ ॥ विष्णुरुवाच—नेत्रतां भगसाहस्रं यातु मत्कृपया हरे । यदा त्वं विश्वरूपाद्धै कवचं पद्मसम्भवम् ॥ ९ ॥ पठिष्यसि तदा पापं सर्वं ब्राह्मणिसङ्गजम् । विनश्यति न सन्देह इतिहासमनः शृणु ॥ १० ॥ सिन्धुदेशेऽभवाद्विप्रोऽध्येतुं स गुरुमन्दिरम । जगाम तत्र विद्यायामभ्यासं प्रचकार सः ॥ ११ ॥ ब्राह्मण्या गमनं तत्र स चकार धृतव्रतः । निःसारितः स गुरुणा कुपुकान्तस्तदाऽभवत् ॥ १२ ॥ गर्हयन्नात्मनः कर्म मुमोहाथ धृतव्रतः । देशे देशे भ्रमन्विप्रो वनमध्ये सरोवरम् ॥ १३ ॥ ददर्श तत्तटे तस्थौ जलपानार्थमुद्यतः । तत्र भाग्यवीर्यं हि पुस्तकं पद्मसंभवम ॥ १४ ॥ दृष्ट्वा तद्वाचयामास स विप्रो दूरसंथितः । अर्द्ध श्लोकोच्चारणच्च कीटास्तद्देहतो गताः । दिव्यदेहमनुप्राप्य ययौ वैकुण्ठमन्दिरम् ॥ १५ ॥

## * अष्टादशपुराणपारायण–विधान *

शुक्लपक्षे दिने शुद्धे वारनक्षत्रयोगतः । करणे चापि लग्ने च ग्रहताराबलान्विते ॥ अमूढे न ग्रहे बाले न च वृद्धौ गुरौ स्थिते । न कृष्णपक्षे ग्रहणे न च नास्तिकः सन्निधौ ॥ शुद्धगेहेऽथवा शुद्धवेदिकायां मठेऽथवा । नदीतीरे देवगेहे सभामण्डप एव च ॥ रथ्यामठेऽथवा रम्यं पुण्यशालासु राघव । पूर्वोक्तलक्षणोपेतं पुराणं शृणुयादिति ॥ स्वयं नमस्य विप्रेन्द्रान् पुराणज्ञं विशेषतः । आसनं कल्पितं कुर्यादूर्ध्वं सर्वावशेषितम ॥ गृहि धर्मासनमिति वक्तव्यं स्यादनिष्ठरम । पुराणप्रक्रमदिन यत्कार्यं तदुदीरयेत् ॥ व्याख्यातारं पुराणस्य वस्त्राद्यैः परिपूजयेत् । शुभानि दत्वा वस्त्राणि सूक्ष्माणि च नवानि च ॥ करकण्ठविभूषादि पात्रमासनमेव च । गन्धपुष्पाक्षतैः पूज्य ताम्बूलं विनिवेद्य च ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ सभासदश्च संपूज्य गणेशं पूजयेत्ततः । ॐ नमेत्यादि मन्त्रेण पूजनं भारती नुतेः ॥ प्रातःकाले पुराणस्य प्रक्रमं प्रारभेदिति । उपक्रमदिने रामत्रिपं च दश वा पुनः ॥ श्लोको द्वितीये दिवसे ततो द्विगुणिताः शुभाः । तृतीये दिवसे राम ततश्चाधिकमिष्यते ॥ दिनानामव्यवच्छेदाद्व्यारव्यतत्पुराणं नं श्रवणं तथा । व्यवस्थितिर्यदा जाता तदा पौराणिकं गुरुम् ॥ ताम्बूलानि प्रदायाथ परेद्युः शृणयादति । पुराणमेव श्रोतव्यं दैनन्दिनमितिः श्रुतिः ॥ व्रतरूपेण यः कश्चित्पुराणं शृणुयान्नरः । यदैवं तु तत्र याति न संशयः ॥ पुराणं श्रोतुकामेन श्लोकश्चैकोऽपि चेच्छ्रुतः । तद्दिने तु कृतं पापं नाशयेत्तु न संशयः ॥ एवं पुराणं शृणयाच्च यस्तु स ब्रह्महत्याकृतपापबन्धनात । गुरार्पातिः स्वर्णहरश्च रामगुर्वङ्गनागश्च विमुक्तिमेति ॥ भारतश्रवणं चापि नियमा ये मयेरिताः । आदिपर्वसमाप्तौ च सूक्ष्मवस्त्रत्रयं ददेत् ॥ सुवर्णं च यथाशक्ति सभापर्वणि वाससी । अनुशासनि कारण्यस्वर्गारोहेषु पर्वसु ॥ आदि पर्वणि पूजा या सा पूजा नृपपुङ्गव । कर्णाश्वमेधवैराटशल्यद्रोणेषु पर्वसु ॥ सूक्ष्मवस्त्रत्रयं शुद्धं निष्कद्वयमथापि वा । क्षुद्रपर्वस्वथान्येषु निष्कार्द्धं समानयेत् ॥ हरिवंशे सनिष्कं तु वस्त्रत्रितयमेव च । भारतस्याखिलस्यैव समाप्तौ क्षेत्रदा भवेत् ॥ रामायणस्य श्रवणे काण्डे-काण्डे प्रपूजयेत् । क्षेत्रं पर्याप्तमथवा सुवर्णमपि दापयेत् ॥ अन्यान्यपि पुराणानि मुनि प्रोक्तानि तान्यपि । श्रोतणां पापनाशाय वक्तुश्चापि विशेषतः ॥ यश्च सर्वपुराणानि षट्त्रिंशत्तु प्रकीर्तयेत् । शृणोति वा न तस्यास्ति चित्तच्छेदः कदाचन । अनुष्ठानप्रकाश पृ० १८९—२९० से उद्धृत ।

## ( पारायण–विधान )

३१ ८ १० १० ११ १८६ ६ २ २ ५२ ५

त्रिपञ्चाष्ट दशादशेशस्कन्धानामनुपूर्वशः । पुराणारिरसद्विद्विपञ्चाशत् पञ्चसुस्थितिः ॥

व्रत ग्रहण करनेसे कन्या सर्वलक्षणयुक्त पति प्राप्त करती हैं, पापरहित हो विधवाको अच्छी गति मिलती है जिसके पुत्र मर जाता है ऐसी स्त्रीको आयुवाला पुत्र प्राप्त होता है, ऐश्वर्यवती अभागिन स्त्रीको सौभाग्य, कुरूपाको सौन्दर्यता मिलती है, रोगी यदि इसका विधान करता है तो वह रोगसे छूट सुडौल देह प्राप्त करता है, यज्ञ-श्राद्ध आदिके समयपर इसके पाठसे

**त्ववीरा हतकिल्बिषा गतिम् ॥ मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २६ ॥ विन्देद्विरूपा विरुजा विमुच्यते य आमया-वीन्द्रियकल्पदेहम् ॥ एतत्पठन्नाभ्युदये च कर्मण्यनन्ततृप्तिः पितृदेवतानाम् ॥ २७ ॥ तुष्टाः प्रयच्छन्ति समस्तकामान् होमावसाने हुतभुक् श्रीहरिश्च ॥ राजन्महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते ॥ २८ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां वैयासिक्यां पारमहंस्यां संहितायां षष्ठस्कन्धे पुंसवनव्रतकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥**

देव और पितर बहुत तृप्त होते हैं ॥ २६, २७ ॥ इससे देवता, पितर प्रसन्न हो उसकी सब इच्छाएँ परिपूर्ण करते हैं। इसीप्रकार होमान्तमें हवन संभारको अग्निके द्वारा भोगनेवाले लक्ष्मीनारायण प्रसन्न हो उनकी सब कामानाएँ परिपूर्ण करते हैं। हे राजन्, यह पुण्यको देनेवाला मरुद्गणका चरित्र तथा कश्यपप्रिय दितिके महाव्रतकी कथा तुमको मैंने कह सुनायी।

उन्नीसवें अध्यायका सार—श्रीशुकदेवजीने कहा—हे राजन्, अपनी स्वामीकी आज्ञा लेकर स्त्री अगहन मासकी प्रतिपदाके दिन सम्पूर्ण मनोरथोंको पूर्ण करनेवाले पुंसवन नामक व्रतका प्रारम्भ करे। मरुद्गणोंकी जन्म कथाएँ सुनकर व्रतके विषयमें ब्राह्मणसे पूछे। श्वेत वस्त्र, आभूषण आदिको धारणकर भोजन करनेके पहले लक्ष्मीनारायणकी पूजा करे। भलीभाँति पूजनके बाद नमस्कार करे। अन्तःकरणको भक्तिसे नम्र बनाकर भगवान्‌की स्तुति करे तदनन्तर ईश्वरबुद्धिसे परमभक्तिके साथ पतिको जो पदार्थ प्रिय हों, उनसे पतिकी सेवा करे। और पति भी स्त्रीके सब कार्योंको सिद्ध करे। यदि स्त्री रजस्वला होनेके कारण पूजनमें अयोग्य हो, तो पति ही अपने अन्तःकरणसे सब काम कर दे। चाहे जो कुछ भी हो, लेकिन व्रतभंग न करे। एक सालके बाद कार्तिकमासकी पूर्णिमाको स्त्री उपवास करे। सबेरे स्नानकर भगवान्‌का पूजन करे पतिसे हवन करावे। हे राजन्, विधिपूर्वक इस व्रतके करनेसे सब मनोरथ सिद्ध होते हैं। इति उन्नीसवाँ अध्याय समाप्त ❀

( गौरीपूजन और भगवान् श्रीकृष्णजी की लीला )

सूत उवाच ॥ साधुपृष्टाः द्विजश्रेष्ठाः कृष्णस्य परमात्मनः । लीलाश्रोतसुखाः सर्वाः पावनाः परमाद्भुताः ॥ शृण्वन्तु कथयिष्यामि यथा ताभिर्वशीकृतः । कुमारिकाश्चारुरूपाः कृष्णलावण्यमोहिताः ॥ गौर्या आराधनं चक्रुर्यमुनायास्तटे शुभाः । समाहिताः कृतस्नाना गन्धपुष्पादिधूपकैः ॥ कृष्णलीला प्रगायन्त्या मार्गे मासि हरिप्रिये । ताश्च स्वप्नेऽपि ददृशुर्यमुनायास्तटं शुभम् ॥ कदम्बपादपाकीर्णं चक्रवाकादिशोभितम् । वृन्दावनातिशोभाढ्यं स्वच्छमृदुलवालुकम् ॥ मन आह्लादजननं तत्र कृष्णसमागमम् । वृन्दावने क्रीडनं च मनोरथपथातिगम् ॥ तदारभ्य विशेषेण चक्रुर्गौरीसमर्चनम् । कृष्णमेवप्रगायन्त्यो यमुनायास्तटं ययुः ॥ पूजोपकरणैर्युक्ता यथाकामं विभूषिताः ॥ अरुणोदयवेलायां कृतस्नानासकौतुकाः ॥ आनर्चुः सैकतमयीं देवीं प्रतिकृतिमुमाम् । गन्धैर्माल्यैः सुरभितैर्बलिभिर्धूपदीपकैः ॥ उच्चावचैश्चोपचारैः प्रवालफलतद्रुमैः । कात्यायनि महामाये महायोगिन्यधीश्वरि ॥ नन्दगोपसुतं देवि पतिं मे कुरुते नमः । इति मन्त्रजपः कृत्वा पूजयामासुरम्बिकाम् ॥ एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः ॥

[ राधा के नामों का कथन ]

राधानामानि यान्याहुस्तन्मे शृणुत भो द्विजाः । श्रीराधा राधिका चैव अनन्दा वृषभानुजा ॥ वृन्दावनेश्वरी पुण्या श्रीकृष्णस्वान्तहारिणी । प्रगल्भा चतुरा श्यामा कामिनी-हरिमोहिनी ॥ ललिता मधुरा साध्वी किशोरी कनकप्रभा । जितनिन्द्रा जितमृगा जितहंसमतङ्गजा ॥ जितरम्भा जितप्रभा श्रीकृष्णहृदयोद्भवा । जितबिम्बा जितशुका जितपद्मसिता तथा ॥ आमोदिनी मुदवती नन्दनन्दनप्रेमिका । दिव्याम्बरा दिव्यहारा मुक्तामणि विभूषिता ॥ कुञ्जप्रिया कुञ्जहासा कुञ्जनायकमोहिनी । चारुरूपा चारुवक्त्रा चारुहेमाङ्गदा शुभा ॥ श्रीकृष्णवेणुगीता च मुरलीहारिणी शिवा । भद्रा भगवती शान्ता कुमुदा सुन्दरीप्रिया ॥ कृष्णकेशा कृष्णरतिः श्रीकृष्ण सहचारिणी । वंशीवटस्थकृष्णेन युग्मायुग्मस्वरूपिणी ॥ भाण्डीरवासिनी शुभ्रा गोपिनाथ प्रियासुखा । श्रुतिनिश्वसितादिव्या गोविन्दरसदायिनी । श्रीकृष्णस्वामिनी चान्ता महानन्दप्रदायिनी । वैकुण्ठजनसंसेव्या कोटिलक्ष्मीसुखावहा ॥ कोटिकन्दर्पलावण्यारतिकोटिरतिप्रिया । भक्ति-ग्राह्या भक्तितुष्टा लावण्यहृदिनीशुभा ॥ ब्रह्मरुद्रादिभिर्ज्ञेया नित्यकौतूहलान्विता । नित्यं वृन्दावने रम्ये नन्दनन्दनसंयुता ॥ नित्यलीला नित्यकामा सर्वशृङ्गारभूषिता । गोरसं पिणीशूरा मन्दा-नन्ददायिनी ॥ महालीला प्रगल्भा च नागरीनगचारिणी । नित्यमाघूर्णिता घूर्णा कस्तूरी तिलकप्रिया॥ पद्मा श्यामा मृगाक्षी च सिन्धुरूपारसान्विता । कोटिचन्द्रा चन्द्रकरा गौरीकोकिलसुस्वरा॥ शीला सुगन्धनिलया नन्दनन्दनलालिता । अशोकवनसंसेव्या भाण्डीरवनवासिनी । वेदद्रुमफलामेव्या वृन्दावनरसालया ॥ एतानि राधानामानि तस्या रूपान्तराणि च । अनेकरूपो गोविन्दो-नेकरूपा च राधिका ॥

( राधा के सखियों के नाम और उनके कार्य )

राधायाः प्रियसख्यश्च तथानेकाः प्रकीर्तिताः । तासां नामानि कर्माणि वच्मि प्राधान्यतोद्विजाः ॥ ललिता च विशाखा च वृन्दा चन्द्रा च मङ्गला । तारावली श्यामला च नन्दिनी मुदिता तथा ॥ पद्मेति तासां नामानि शृणु कर्माण्यतः परम् । ललिता वाक्यनिपुणा प्रणाली धौतसंभ्रमा ॥ उभयोर्योगमिच्छन्ति प्रत्यहं तत्सखाश्रया । विशाखा च यथा छाया तथा राधा-नुसर्पिणी । चन्द्रा गन्धतनूरागमुखवासादिसंस्कृतौ । विचक्षणा यथाकालं तत्तदेव समर्पयेत् ॥ वृन्दा वृन्दावनोद्भूतकुसुमादिनिवेदिनी । तत्तत्कालसमानेत्री तत्सुखाय यथोचितम् ॥ मङ्गला

मङ्गलगीतवीणावाद्यादिसंयुतो । गायति मधुरं पार्श्वे शाययित्वा ततो व्रजेत् ॥ तारावली च सततमलङ्कारविधौ शुभा । वितानशयनादाना रचनासु पटीयसी ॥ श्यामला स्नानसंस्कारवस्त्रादिपरिधापने । प्रेयसी सर्वदा सख्यानि युक्ताङ्गप्रसाधने ॥ नन्दिनी च कराभ्यादिलालयन्तीपटाञ्चलैः । आनन्दकारिणी बालव्यजनेन च संयुता ॥ मुदिता विविधं भोज्यं भोजयन्ती यथारुचि । ताम्बूलवीटिका दत्वा मन आह्लादकारिणी ॥ पद्मा प्रहल्लिका रूढा पदार्थकथनादिभिः । एताश्चान्याः स्वस्वकार्ये सावधानतया स्थिताः ॥

( भागवत श्लोकसंख्या )

अथ भागवतस्कन्धश्लोकसंख्याश्लोकैरुच्यते । त्रिभूमिनागा ८१३ रसनन्दरामा ३६६ सार्धानृपेन्द्रा १४१६ भुजवाणशुक्राः १४५२ । सार्धाङ्गरामाद्रिमिता ७३६ । गजेषु नागो भूताः ८५८ । सार्धखतर्कशैलाः ७६० ॥ १ ॥ गजाग्निनन्दा ९३८ श्रुतुराद्रिगावं ९७४ रुयब्धङ्करामा ३९७३ नगशैलविश्वे १३७७ । सार्धाङ्कषट्पञ्च च ५६९ गद्यपद्यसंख्याक्रमात्स्कन्धगतावगम्या ॥ २ ॥ समुद्रषट्द्वङ्मनवो १४२६४ऽखिलैक्यमेषामनुष्टुम्मितयस्तुवेद्याः । रामाभ्रनन्दा ९०३ अथ सार्धचक्षुः शैलाब्धयः ४१२ सार्धषडस्त्रभूपाः १६०६ ॥ ३ ॥ पादोनखद्वन्द्वनृपा १६११ त्रिनाग सूर्या १२८३ विपादाभ्रशराङ्कसंख्याः ९४९ । सार्धाद्रिवेदाष्ट ८४७ च सान्धिचन्द्र पञ्चास्त्रभूभ्यो १०५७ मनुदिङ्मिताश्च १०१४ ॥ ४ ॥ तत्त्वाब्धिवेदा ४४२५ अथ सान्धिवेदादोन्द्रा १४७४ सपादागुणचन्द्रतर्काः ६१३ । सर्वैक्यमङ्ग्रयु नखषट्द्विभूपाः १६२५६ उवाच वाचो गज षड्जिनाश्च २४६८ ॥ ५ ॥ खेन्द्राश्च १४० सत्ताङ्गभुव १६७ कुबाणा ५१ भूताभ्रभूम्यो १०५८ । द्विगजाः ८४ कुकाष्ठाः १७१ ॥ नवेषव ५९ त्रिषुगुणा ३५३ नवेशा ११९ गोम्बूनि ४९ चैक्यं तु खदग्गुणाढ्याः १३२० ॥ ६ ॥ प्रायेण पादान्वितपद्यमान सत्रैकमध्याय समासिगद्यम् । पादोननन्देन्दुचतुर्मितानि ४१८ पद्यानि तेषामितिकल्पितानि ॥ ७ ॥ जातानि सर्वस्य युतौ महस्त्राण्यष्टादशाध्यार्धमिहानमेकम् । तत् पाठभेदान्मम वा प्रमादात्पदत्यन्तमल्पं नहि दोषपात्रम् ।

( रावणके प्रधान सैनिक )

कोटीशो मनसः पूर्णः शलः पालोहली मुखः । पिच्छलः कौणपश्चक्रः कालवेगः प्रकालकः ॥ हिरण्यबाहुः शरणः कल्कः कालदन्तकः । पुच्छाण्डकोमण्डलकः पिण्डसेक्तारभेणकः॥ उच्छ्रिवः करभो भद्रो विश्वजेता विरोहणः । शिलीशलकरोमूकः सुकुमारः प्रेरेषणः ॥ मुद्गरः शतरोमा च सुरोमा च महाहनुः । पारावतः पारिपात्रः पाण्डुरो हरिणः कृशः ॥ विहङ्गः शरभो दक्षः प्रमोदः सहतापनः । क्रकरः कुण्डरो वेणी वेणीस्कन्धः कुमारकः ॥ बाहुकः शङ्खवेगश्च धूर्तकः पातपातकौ । शङ्कुकर्णः पिठरकः कुटीरमुखरोचकौ ॥ पूर्णाङ्गदः पूर्णमुखः प्रभापः शकुलिर्हरिः । अमाहिठः कामठकः सुषेणोमानसोव्ययः॥भैरवोमुण्डदेवाङ्गः पिशङ्गश्चोडपालकः । ऋषभो वेगवान्नाम पिण्डारकमहाहनूः ॥रक्ताङ्गः सर्वसारङ्गः समृद्धः पाटवासकौ । वराहको रावणकः सुमित्रश्चित्रवेगिकः ॥ पराशरस्तरुणिको माणिस्कन्धस्तथारुणिः । सेनाध्यक्षा महात्मानकीतिताः कीर्तिवर्धनाः ॥ प्राधान्येन बहुत्वात्तु न सर्वे परिकीर्तिताः ।

( रावणके औरसपुत्र )

अद्भुतरामायणे—रावणस्यौरसाः पुत्राः सह राक्षसपुङ्गवैः । नानाप्रहरणोपेता दुद्रुवू राघवम्बरे ॥ नामान्येषां प्रवक्ष्यामि भारद्वाज शृणुष्व मे । कालकण्ठः प्रभाषश्च तथा कुम्भाण्डकोपरः ॥ कालकक्षः शितश्चैव भूतलोन्मथनस्तथा । यज्ञबाहुः प्रबाहुश्च देवयाजी च सोमपः ॥ मज्जालश्च महातेजा क्रथः क्राथो वसुव्रतः । तुहरश्चतुहारश्च चित्रदेवश्च वीर्यवान् ॥ मधुरः

सुप्रसादश्च किरीटश्च महाबलः । वसनो मधुवर्णश्च कलशोदर एव च ॥ घर्मदो मन्मथकरः ध्रुवावक्रश्च वीर्यवान् । श्वेतवक्त्रः सुवर्णवक्त्रश्च चारुवक्त्रश्च पाण्डुरः ॥ दण्डबाहुः सुबाहुश्च रजः कोकिलकस्तथा । अचलः कालकाचश्च बालेशो बालभचकः ॥ सञ्चानकः कोकनदो गृध्रपत्रश्च जम्बुकः । लोहाजवक्त्रो जवनः कुम्भवक्त्रश्च कुम्भकः ॥ मुण्डग्रीवश्च कृष्णौजा हंसवक्त्रश्च कुञ्जरः । एते रावणपुत्राश्च महावीर्यपराक्रमाः ॥ बाहुशब्दैः सिंहनादैः पूरयन्तो दिशो दश । एषां सैन्यसहस्राणां सहस्राण्यर्बुदानि च ॥ नानाकृतिवयो रूपा विविधायुधधारिणः । कूर्मकुक्कुटवक्त्राश्च सर्पजम्भकवक्त्रकाः ॥ गोमायुमुखवक्त्राश्च शशोलूकमुखास्तथा । खरोष्ट्रवदनाश्चैव वराहवदनास्तथा ॥ मनुष्यमेषवक्त्राश्च शृगालवदनास्तथा । मार्जारशशवक्त्राश्च दीर्घवक्त्राश्च केचन ॥ नकुलोलूकवक्त्राश्च काकवक्त्रास्तथा परे । आखुबभ्रुकवक्त्राश्च मयूरवदनास्तथा ॥ मत्स्यमेषाननाश्चैव अजाविमहिषाननाः । ऋक्षशार्दूलवक्त्राश्च द्वीपिसिंहाननास्तथा ॥ भीमागजानना-श्चैव तथा नक्रमुखास्तथा । गोरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा ॥ महाजठरपादाङ्गास्तबकाक्षाश्च दुर्मुखाः । पारावतमुखाश्चान्य तथा वृषमुखाः परे । कोकिलाभाननाश्चान्ये श्येनतित्तिरिकाननाः ॥ कृकलासमुखाश्चैव विरजोम्बरधारिणः । व्यालवक्त्राः शुकमुखाश्चण्डवक्त्राः शुभाननाः ॥ आशीविषाश्चीरधरागानासावरणास्तथा । स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः ॥ ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषणाः । गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः ॥ स्कन्धे मुखाद्विजश्रेष्ठ तथा ह्युदरतो मुखाः । पृष्ठे हनुमुखास्तथा जङ्घामुखास्तथा । पार्श्वाननाश्च बहवो नानादेशमुखास्तथा । तथा कीटपतङ्गानां सदृशास्यामहाबलाः ॥ नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः ॥ नानावृक्षभुजाः केचिद् भुजङ्गवदनाः परे । खड्गमुखा कुक्कुमुखा अपरे गरुडाननाः ॥ चोलसंवृतगोत्राश्च नाना फलकवाससः । नानावेषधराश्चान्ये नानामाल्यानुलेपनाः ॥ नानावस्त्रधराश्चान्ये चर्मवासस एव च । उष्णीषिणो मुकुटिनः कम्बुग्रीवाः सुवर्चसः ॥ इत्यादि ।

( रावण के सैनिकों का नाम )

शृणु नामानि चान्येषां ये न्ये रावणसैनिकाः । शङ्कुकर्णो निकुम्भश्च पद्मः कुमुद एव च ॥ अनन्तो द्वादशस्तथा कृष्णोपकृष्णकौ । घ्राणश्रवाः कपिस्कन्धः काञ्चनाक्षो जलन्धमः ॥ अक्षसन्तर्जनो ग्रहनकुनदीकस्तमोभ्रकृत् । एकाक्षो द्वादशाक्षश्च तथैवैकजराभिधः ॥ सहस्रबाहुर्विकटो व्याघ्राक्ष्यः क्षितिकम्पनः । पुण्यनामातुनामा च सुवक्त्रः प्रियदर्शनः ॥ परिश्रुतः कोकनदः प्रियामाल्यानुलेपनः । अजोदरोगजशिराः स्कन्धाक्षः शतलोचनः ॥ ज्वालाजिह्वः करालश्च सितकेशो जटी हरिः । चतुर्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवाः ॥ विकृताक्षो धनुर्वक्त्रो जाठरो मारुताशनः । उदराक्षो रथाक्षश्च वज्रनाभो वसुप्रभः ॥ समुद्रवेगो विप्रेन्द्र शैलकंपी तथैव च । वृषमेषप्रवाहश्च तथा नन्दोपनन्दकौ ॥ धूम्रश्वेतः कलिङ्गश्च सिद्धार्थो वरदस्तथा । प्रियकश्चैकनन्दश्च बहुवीर्यः प्रतापवान् ॥ आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा । क्षेमबाहुः सुबाहुश्च सिद्धपात्रश्च सुव्रतः ॥ गोव्रजः कनकापीडो महापारिषदेश्वरः । गायनो दमनश्चैव बाणः खड्गश्च वीर्यवान् ॥ वैताली गतितालौ च तथा कथकवातिकौ । हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह ॥ रणोत्कटः प्रहासश्च वेतालिकश्च नन्दकः ।

स्वर्गीय—महामहोपाध्याय अस्मत्पितृचरण पण्डित विद्याधरशास्त्रि गौड स्मारक—

भारतीय-कर्मकाण्ड-मण्डल की ६९ पुष्पलता

[ द्वादश-स्कन्ध ]

# श्रीमद्भागवत भाषाटीका

[ 'सरस्वती' भाषाटीका दृष्टान्त और 'प्रकाश' टिप्पण से अलंकृत ]

संपादक—उत्तरप्रदेशीय सरकारद्वारा सम्मानित विद्वान् आचार्य—श्रीदौलतराम गौड,

वेदाचार्य, मीमांसाशास्त्री, कर्मकाण्डशास्त्री, पौरोहित्यरत्न

[ भागवत महापुराण का श्रवण करना अत्यावश्यक ]

यैर्न श्रुतं भागवतं पुराणं नाराधितो वै पुरुषः पुराणः ।
हुतं मुखेनैव धराऽमराणां तेषां वृथा जन्म गतं नराणाम् ॥

( भागवतदानमें विशेषता )

श्रीमद्भागवतं दद्याद्वैष्णवाय द्विजन्मने । शक्तिश्चेन्न विलम्बेत चलमायुर्विचारयन् ॥ श्रीमद्भागवतं साक्षाद्भगवद्रूपमद्भुतम् । यो दद्याद्वैष्णवाय च पण्डिताय द्विजन्मने ॥ सकोटि-कुलमुद्धृत्य ह्यप्सरोगणसेवितः । विमानमधिरुह्येति गोलोकं योनिदुर्लभम् ॥ कन्यादानसहस्राणि वाजपेयशतानि च । सधान्यक्षेत्रदानानि तुलादानानि यानि च ॥ महादानानि यान्यष्टौ छन्दोदानानि यानि च । श्रीभागवतदानस्य कलां नार्हन्ति षोडशीम् ॥ तस्माद्यत्नेन तद्देयं वैष्णवाय द्विजन्मने । संभूष्य वस्त्रभूषाभिर्हेमसिंहासनस्थितम् ॥ ( पुरुषोत्तममाहात्म्य )

[ मरणावस्थाके सान्निध्यमें भागवतके पाठ का क्रम ]

गरुडपुराणे—श्लोकं श्लोकार्धपादं वा योऽन्ते भागवतं पठेत् ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥

( किन किन स्कन्धपाठ श्रवणसे विशिष्ट लाभ )

गौरीतन्त्रे—प्रथमस्कन्धश्रवणाद्वैष्णवं तनयं लभेत् । द्वितीयस्कन्धश्रवणात्परमाङ्गतिमाप्नुयात् ॥ तृतीयस्कन्धश्रवणाल्लिङ्गदेहेन मुच्यते । चतुर्थस्कन्धश्रवणात्परमं पदमाप्नुयात् ॥ पञ्चमस्कन्धश्रवणान्मुक्तो भवति नारकैः । षष्ठस्य श्रवणादेवि ब्रह्महत्यां व्यपोहति ॥ सप्तमस्कन्धश्रवणात्सत्सङ्गतिमवाप्नुयात् । अष्टमश्रवणादेवि ऐश्वर्यमतुलं लभेत् ॥ नवमस्कन्धश्रवणात्सन्ततेर्वृद्धिमाप्नुयात् । दशमश्रवणमात्रेण रमास्वादी भवेद्धरेः ॥ एकादशस्य श्रवणात् ज्ञानविज्ञानभक्तिमान् । द्वादशश्रवणादेवि आश्रयं लभते नरः ॥ बहुना किमिहोक्तेन सर्वं सर्वत्र तिष्ठति ।

( श्रीमद्भागवतसे क्या नहीं मिल सकता )

विद्याप्रकाशो विप्राणां राज्ञां शत्रुजयो विशाम् ।
धनं स्वास्थ्यं च शूद्राणां श्रीमद्भागवताद्भवेत् ।
योषितामपरेषां च सर्वं वाञ्छितपूरणम् ।

कुछ बीजों का संकलन—

कृष्ण—क्लीम् । शर्मद—क्ष्म्रौं । शापद—हुं । जमद—वं । क्रामद—क्लीं । रक्षा—ह्रीं । वायु यम् । अग्नि—रम् । वरुण—वां चन्द्र—ठं । पृथ्वी—लं । प्रणव—ॐ । वाग्भव—ऐं । माया—ह्रीं । लक्ष्मी—श्रीं । पाश—आं । कला—हुं । गरुड—क्रौं । अंकुश—क्रों । काली—क्लीं । सिद्ध—क्रां । धर्म—क्रैं । जया—क्रं । हयग्रीव—क्रूं । काम—क्लीं । गो—ऊं । साध्य—क्रें । वधू—स्त्रीं । महाक्रोध—ह्रूं । क्षेत्रपाल—क्षौं । कूर्म—हूं । प्रासाद—ह्रौं । शाकिनी—फं । चण्ड—फ्रौं । विश्व—प्रौं । शीर्षक—चं । शल्य—छं । शंकु—जं । निषद—झं । टेलि—ञं । कील—टं । अस्थिभेदी—ठं । वैतस्तिक—डं । कटकट—ढं । रज्जु—णं । उन्माद—तं । गंमाद—थं । क्षेपणी—दं । मुष्टिका—धं । रणी—नं । छुरिका—पं । दिग्—फं । संवर्ग—वं । ईली—भं । पाली—मं । कुलायं । फली—रं । तर्जनी—लं । घुमला—वं । वेधो—शं । दुरी—षं । दर्वी—गं । गुड—हं । द्रुमचं । सुधा—पीं । वषट्- वषट् । कमठ—कं । कौरज—सं । गणेश—गं । कर्तरी—घं । शतघ्नी—डं ।

—दौलतरामगौड

१—रुद्रचिन्तामणौ—रोगोत्पातादिशान्त्यर्थे नैव कालादिशोधनम् । ईश्वराराधनार्थे वाथवा पापापनुत्तये ॥ यदि रुद्राद्यनुष्ठानं न मुहूर्तादि विचिन्तयेत् । न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम् ॥ २—षडङ्गानि सकृत् जप्त्वा रुद्रं च नवधा जपेत् । अन्ते जप्त्वा षडङ्गानि जपन् रुद्रीं विधानवत् ॥ ३—होमस्तस्य दशांशेन कुण्डे वा स्थण्डिलेऽपि वा । ४—गच्छ गच्छ महादेव स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥ यान्तु देवगणाः सर्वे पूजामादाय कृत्स्नशः । दक्षिणां च विपुलां दत्त्वा पुनरागमनाय च ॥ ५—भूतशुद्धिं विना कर्म क्रियते यज्ञयादिकम् । तत्सर्वं निष्फलं यस्मात्तस्मात्तां पूर्वमुच्चरेत् ॥ ६ दक्षिणा हेम-पश्वादि गजवाजिरथापि वा । तुलाप्रभृतिदानानि देयानि विविधानि च ॥ एवं कृते भवेत् सिद्धिः [illegible] जप इष्टदः ॥ ७—शारदातिलके—गन्धाष्टकं तन्त्रिविधं शक्तिविष्णुशिवात्मकम् । चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः । जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः ॥ चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसेव्यकाः । जटामांसीमुरमिति विष्णोर्गन्धाष्टकं विदुः ॥ चन्दनागुरुकर्पूरतमालजलकुङ्कुमम् । कुशीतं कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः ॥ गणेशगन्धाष्टकम्-चन्दन, चोर, रोचन, अगर, मृग, मृगकामद, कस्तूरी और कपूर या चन्दन, अगर, रोचन, कुंकुम मद [ रक्तचन्दन ] ह्रीवेर । सूर्य के लिए-जल, केसर, कुष्ठ, रक्तचन्दन, चन्दन, उशीर, अगर और कपूर । ८—संस्काररत्नमालायाम् सुवर्णकपिला पूर्णा द्वितीया गौरपिङ्गला । तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला । पञ्चमी बहुवर्णा स्यात् षष्ठी च श्वेतपिङ्गला । सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला ॥ नवमी पाटला ज्ञेया दशमी पुच्छपाटला । स्मृत्यन्तरे-एकवर्णा तु कपिला इत्यपि कपिलालक्षणमुक्तम् । नवाम्रपल्लवाभा या पीतनेत्रा सुलक्षणा । सा धेनुः कपिला ज्ञेया साक्षाद्विष्णुस्वरूपिणी ॥ लाक्षारससमानाभा श्वेतरोम्णी ललाटतः । सा रक्ता कथिता विष्णुस्वरूपा धेनुरुत्तमा या गौः स्फटिकासंकाशा सुस्निग्धा स्निग्धलोचना । सा गौः श्वेता समादिष्टा मुनिभिस्तत्त्वदर्शिभिः ॥ अतसीपुष्पसंकाशा लम्बपीतपयोधरा । सा नीली सुरभिर्ज्ञेया महापापविनाशिनी ॥ भिन्नाञ्जनसमानाभा पीनोध्नी चारुमस्तका । सा कृष्णा कृष्णरूपा च महादोषनिवारिणी ॥ ९—धारणविधी—बाह्वौ च धारणात्ताम्रं ब्रह्महत्यां व्यपोहति । हस्तयोर्धारणादेव सर्वतीर्थफलं लभेत् ॥ कर्णयोर्धारणात्ताम्रं कोटितीर्थफलं लभेत् । कण्ठे च धारणात्ताम्रं योगी मोक्षमवाप्नुयात् ॥ ताम्रमिति षष्ठ्यर्थे द्वितीया । १०—पञ्चसूत्रविधानं च पार्थिवे न विचारयेत् । यथा कथञ्चिद् विधिना रमणीयं तु कारयेत् ॥ ११—विकरे पिण्डदाने च तर्पणे स्नानकर्मणि । आचान्तः सम्प्रकुर्वीत त्यजेत् दर्भं सदा बुधः ॥ १२—प्रक्षालितैस्तिलैः कृष्णैस्तर्पयेत्तु पितॄन्सदा । १३—ब्रह्मयामले शैवागमे च—तारताम्रसुवर्णाश्मकैः षोडशरवेन्दुभिः । [illegible] मूर्तिर्मृत्युदारिद्र्यनाशिनी ॥ दशहेम, द्विषट् ताम्रं रौप्यं षोडशकं तथा । कांस्यं चतुर्गुणं कार्यं पाः [ आ ] रदं सप्तभागकम् ॥ लोहयुग्मं तथा चन्द्रं त्रपुमेलनसंयुतम् । रसधातून् क्रमेणैव मूर्तिः सर्वत्र सिद्धिदा ॥ किञ्चित्सत्त्वेन संमिश्रं वागैश्वर्यप्रदायिनी ॥ १४—आचारभूषणे-सर्वत्र पावनी गङ्गा त्रिषु स्थानेषु दुष्यति । म्लेच्छस्पर्शे सुराभाण्डे कूपादिजलमिश्रणे ॥ हस्ते धृतानि पुष्पाणि ताम्रपात्रे च चन्दनम् । गङ्गोदकं च चर्मपात्रे निषिद्धं सर्वकर्मसु ॥ १५—आह्निकभास्करे— शालग्रामशिलावारि सोमपानं दिने दिने । पात्रान्तरेण तद्ग्राह्यं न करेण कदाचन ( करेण सुरया समम् ) । श्रीविष्णोः पादसलिलं करे कृत्वा मुखे क्षिपेत् । अदत्त्वा तु पिबेत्तोयं रौरवं नरकं व्रजेत् । १६—मद्भक्तनाह्निके शिवनारदसंवादे—सर्वं बाणार्पितं ग्राह्यं भक्ताभक्तैश्च सर्वदा । ग्राह्याग्राह्यविचारोऽयं बाणलिङ्गे न विद्यते ॥ १६—विधान मालायां दानप्रस्तावे वृक्षदानाशक्तौ तत्प्रत्याम्नायः चतुर्वर्गचिन्तामणौ वृक्षगुल्मलतादीनां दानं प्रत्यक्षदा हि । तासामभावे राजेन्द्र गोमूल्यं तत्र कल्पयेत् ॥ वत्सगन्तं समारभ्य यावद्वर्षचतुष्टयम् । तावद् गोदानिकं कर्म कुर्यात्तत्फलसिद्धये ॥ १८—स्कान्दे— पुण्ड्रोद्धृतश्चन्दनाद्यैरिति भस्म न गन्धयेत् । [illegible] चन्दनाद्यं च भस्मोपरि न धारयेत् ॥ १९—एला द्राक्षा च खर्जूरी वाताबु श्रीफलं तथा । शर्कराखण्डसंयुक्तं पञ्चखाद्यमिति स्मृतम् ॥

२०—शिवरहस्ये— षट्पत्रेण तु बिल्वेन पूजितस्तु स्वयं शिवः । ददाति शिवसायुज्यं सप्तपत्रार्चितस्तथा ॥ षट्पत्रैः सप्तपत्रैश्च बिल्वपत्रैः शिवोऽर्चितः । एकेन लक्षपत्रेण सौवर्णानां फलं लभेत् ॥ पञ्च पत्रं भवेद् बिल्वं पञ्चवक्त्रः स्वयं शिवः । पञ्चपत्रार्चितो देवो लक्षपत्रार्चितो भवेत् ॥ २१—पद्ममानपङ्क्तौसमुद्रगानदीतीरे सङ्गमे वा शिवालये । आरामे विष्णुगेहे वा देवखातादिसन्निधौ ॥ गृहस्येशानभागे वा गङ्गातीरे विशेषतः । स्थण्डिले पर्वताग्रे वा गृहाग्रे वा गृहाङ्गणे ॥ मण्डपस्तु प्रकर्तव्यः शुभलक्षणलक्षितः । गृहाग्रे यदि कुर्वीत तत्समां कुं परित्यजेत् ॥ २२—विद्यार्णवतन्त्रे—यस्य मन्त्रस्य ये न्यासाः कर्तव्या सिद्धिमिच्छता । जपतर्पणहोमार्चाः सिद्धिमन्त्रकृता अपि ॥ अङ्गन्यासादिभिर्हीना न दास्यन्ति फलान्यपि । २३—पूर्वेऽग्निर्देवता विष्णुर्दक्षिणेन हर स्थितः । पश्चिमेन स्थितो ब्रह्मा एता वै अग्निदेवता ॥ २४—देवतानां प्रातर्होमस्तु प्रहरार्धेन भूतिदः । मध्याह्ने तु मनुष्याणां मोक्षहेतो क्रियामिकः ॥ अपराह्णे पितृणां च सन्ध्यायां गुह्यभौतिकम् । रात्रौ पापविनाशार्थं दिवासिद्धिप्रसाधने ॥ प्रहरार्धे तु होतव्यमर्धरात्रे तदायुधम् ॥ तदायुधम् ॥ प्रत्यूषे पुत्रदं वत्स उदये सार्वकामिकम् ॥ २५—सत्याषाढसूत्रे—केशानां नास्ति नारीणां वपनं व्रतमन्त्रयोः । गोवधादिषु सर्वेषु छेदयेदङ्गुलद्वयम् ॥ २६—[illegible]— अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः । रूपनारायणस्तु—चूतस्थाने वेतसमाह । पञ्चगव्यसमन्वितमिति क्वचित्पाठः । २७—यज्ञभाण्डानि सर्वाणि मण्डपोपस्करादिकम् । यच्चान्यदपि तद्गेहे, तदाचार्याय निवेदयेत् ॥ २८—प्रतिष्ठात्रैविक्रम्याम्—ततो मुहूर्तं विश्रम्य रत्नन्यासं समाचरेत् । २९—निश्चकोणे—स्वर्णं रूप्यं च ताम्रं च रङ्गं यशदमेव च । शीशं लोहं पारा सम्मश्र ति धातवोऽष्टौ प्रकीर्तिताः ॥ अष्टधातुमयप्रतिमानिर्माणे तु रसं विहाय पित्तलं ग्रहणम् । आरकूटं तथा चेति हेमाद्रिः भविष्योक्तेरिति भेदः । सीसा, लोहा, फौलाद, सुवर्ण, चांदी, पीतल, काँच, लौह, मुण्डलौह या सोना, चांदी, ताँबा, रांगा, सीसा, पीतल फौलाद । सुवर्णं रजतं ताम्रमारकूटं तथैव च । लोहं त्रपु तथा सीसं धातवः परिकीर्तिताः ॥ ३०—आचारेन्दौ—एका गणाधिपे दद्याद् सूर्ये त्रीणि शङ्करे । चत्वारि केशवे दद्यात्सप्ताश्वस्थे प्रदक्षिणाम् ॥ एकहस्तप्रमाणं च एका चैव प्रदक्षिणा । अकालं दर्शनं चैव हन्ति पुण्यं पुरातनम् ॥ ३१—चित्रभानुमनड्वाहं देवं गोष्ठं चतुष्पथम् । ब्राह्मणं धार्मिकं चैव नित्यं कुर्यात्प्रदक्षिणाम् ॥ ३२—वैदिकाचण्डीविनायकयोरेकाऽपि प्रदक्षिणा कार्या । विशिष्य विधानात् । वर्णमिच्छन्ति स्वरमिच्छन्ति गायकाः । मक्षिका व्रणमिच्छन्ति अर्थमिच्छन्ति पण्डिताः ॥ ३३—अङ्गुष्ठानामिकाभ्यां च समिन्मध्यं प्रगृह्य च । मन्त्रान्ते जुहुयाद्वह्नौ समिद्धोमो विधीयते ॥ ३४—डामरतन्त्रे—मन्त्राणां पल्लवो वासो मन्त्राणां प्रणवः शिरः । शिरः पल्लवसंयुक्तो मन्त्रः कामदुघो भवेत् ॥ ॐकारमुखरौ मन्त्रौ वेदागमगणुरू[illegible] । पल्लवस्त्वागमे मन्त्रे वैदिके नास्ति पल्लवः । ३५—तन्त्रान्तरे—महाभिषेकं सर्वत्र शङ्खेनैव प्रकल्पयेत् । सर्वत्र प्रशस्तोऽब्जः शिवसूर्यार्चनं विना ॥ ३६—आचारेन्दौ—शिवं गवयशृङ्गेण केशवं शंखवारिणा । विघ्नार्कौ ताम्रपात्रेण स्वर्णेन जगदम्बिकाम् ॥ ३७—द्रवीभूतं घृतं चैव द्रवीभूतं च चन्दनम् । नार्पयेन्मम तुष्ट्यर्थं घनीभूतं तदर्पयेत् ॥ ३८—[illegible]—अलाभे दन्तकाष्ठानां प्रतिषिद्धदिनेष्वपि । अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति ॥ ३९—अस्नाताशी मलं भुङ्क्ते अजपः पूयशोणितम् । अहुताग्निः कृमिं भुङ्क्ते अदाता कीटमश्नुते ॥ ४०—असंख्यातास्च संख्यातः सहस्रगुण उच्यते । ४१—न गृहे करवीरोत्थैः कुसुमैरर्चनं हितम् । ४२—देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् । नमस्कारं न कुर्याच्चेदुपवासेन शुद्ध्यति ॥ ४३—विधुरो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः । परार्थं कर्म कुर्वाणा पातयन्ति पतन्ति च ॥ ४४—जनने मरणे चैव श्वशृगालमृगादिभिः । स्पृष्टे च बिम्बे तन्त्राणां सङ्करे समुपस्थिते ॥ एवमादिषु चान्येषु संप्रोक्षणविधिर्भवेत् ॥ व्यत्यये परिवाराणां भोगादीनां च गौतमः । पूर्ववत्स्नपनं कृत्वा शान्तिहोमं समाचरेत ॥ ३५—स्मृत्यन्तरे—तुलसीमालां तु यः कण्ठे समाहति

सर्वदा । लिप्यते न स तु पापेन पद्मपत्रमिवाम्भसा ॥ करे कण्ठे शिखायां च कर्णयोरुभयोरपि । पवित्रधारको यश्च न स पापेन लिप्यते । कुशासनं सदा पूतं यतीनां तु विशेषतः । कुशाभावे द्विजश्रेष्ठः काशैः कुर्वीत यत्नतः । तर्पणादीनि कर्माणि काश्यः कुशसमा स्मृताः ॥ कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यात् ४६—पूजाकाले होमकाले प्रागुत्तरतथाग्रयाः । दूर्वाविल्वेषु या पूजा प्रागग्रेषु विधीयते ॥ चतुरङ्गुलेषु या पूजा चतुःकाले विधीयते । प्रागग्रं पूजयत्येव धर्मकामार्थमोक्षदः । दक्षिणाग्रेषु यः पूजां शत्रुनाशो भवेदिति ॥ पश्चिमोत्तरकाग्रेषु कामा भोगश्च नित्यशः ॥ ४७—वामपात्रे चतुर्ब्रह्मा पद्मनाभश्च दक्षिणे । मध्यपात्रे स्थितः साक्षात् साम्बः सर्वार्थसाधकः ॥ इन्द्रादयो लोकपाला वृत्ताग्रे परिकीर्तिताः ॥ ४८—शैवागमे स्कान्दे च—पार्थिवपूजास्थानम्—पाषाणे दारुजे देशे दर्भान्तरगते स्थले । पुष्पप्रकरसङ्कीर्णे पाणौ वा वैदिका भुवि ॥ सविल्वताम्रपात्रे वा स्थापयेत्पार्थिवं शिवम् । ४९—योगिनीतन्त्रे—यथा नानाजलं देवि ! गङ्गायां पतितं यदि । गङ्गैव जायते सर्वं तथा तेजः सुरेश्वरि ॥ काशी लयं हि यत्किञ्चित्काशी भवति तत्क्षणात् । अण्डजा उष्मजाश्चैव उद्भिजाश्च जरायुजाः । ते सर्वे मुक्तिमायान्ति काश्यां श्रेत्राग्यतो मृताः ॥ ५०—इयं वाराणसी देवि ! महातेजोमयी शुभा । युगभेदाज्जनैरेव दृश्यते हि चतुर्विधा ॥ कृते रत्नमयी काशी त्रेतायां स्वर्णजा स्मृता । द्वापरे सा शिलारूपा कलौ भूमिमयी शुभा । ५१—गन्धर्वतन्त्रे—आसनं शयनं वस्त्रं भूषणं पादुका तथा । छायां कलत्रमन्यच्च यद्गुरोस्तत्प्रपूजयेत् ॥ गुरोशय्यासनं पीठमुपानच्छत्रपादुकाम् । स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ॥ ५२—श्रुतिस्मृतिविरुद्धञ्च जपं रात्रौ विवर्जयेत् । ५३—अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा । निरासनः शयानो वा गच्छन्नुस्थितः एव वा ॥ रथ्यायामशिवस्थाने न जपेत्तिमिरालये । प्रलपन्वा जपेद्यावत्तावन्निष्फलमुच्यते ॥ सकृदुच्चारिते शब्दे प्रणवं समुदीरयेत् । प्रोक्ते पामरशब्दे तु प्राणायामं सकृदुच्चारेत् ॥ बहुप्रलापे चाचम्य न्यस्याङ्गानि ततो जपेत् । पतितानामन्त्य जातानां दर्शने भाषणे श्रुते ॥ क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् । कृत्वाचम्य जपेच्छेषं यद्वा सूर्यादिदर्शनम् । ५४—नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् । दिवसातिक्रमात्पुंसः सिद्धिहानिः प्रजायते ॥ ५५—अस्मिन् यत्र य आचारस्तत्र धर्मस्तु तादृशः । अत्र भ्रमो महान् दोषस्तस्माद् भ्रान्ति त्यज प्रिये ॥ सर्वकार्येषु सर्वत्र तान्त्रिके वैदिके तथा । अविश्वासो महान् दोषो यत्नतस्तं विवर्जयेत् ॥ ५६—विना मन्त्रेण चेत्पूजा देवता न प्रसीदति । ५७—हस्तमात्रं चतुरस्रं गोमयेनोपलेपितम् । अङ्गुष्ठपर्वमात्रोच्चं वालुकामण्डलं तथा ॥ तत्रापि ले—[ख] पनं कृत्वा तत्र होमः फलप्रदः । ५८—शृणु देवि प्रवक्ष्यामि मानं हवनसिद्धये । पुष्पं समग्रं जुहुयाच्छतसंख्यास्तिलांस्तथा ॥ लाजा मुष्टिप्रमाणाः स्युर्घृतं कर्षप्रमाणम् । चुल्लुकार्धं मधुक्षीरमन्नं ग्रासमितं भवेत् ॥ समग्रैश्च सखण्डैश्च फलानां च यथेच्छया । रम्भाफलं चतुःखण्डं लघु चेत् खण्डितं न हि ॥ नारिकेलस्य खण्डन्तु स्थूलं कुर्यान्मनः प्रियम् । पर्वस्थाने चेक्षुदण्डं मनः सन्तोषकारकम् ॥ द्राक्षाफलं समग्रं स्याद् गुञ्जामानं ततो भवेत् कर्पूरकोशि [ मृगमदः ] कादीनां मनः सन्तोषकारकम् ॥ ५९ धूमागारे चान्धकारे चाज्ञाते पूजनं शिवे । नरकाय महादेव्याः पूजनं विद्धि पार्वती ॥ ६०—न स्वयं छेदयेद्देवि बलिं साधक सत्तमः । बहवो नैव हन्तव्या यदि च्छेदात्मनो हितम् ॥ ६१—आयुर्वृद्धौ तथा शान्त्यै कोटिहोमं चरेन्नृप । कोटिहोमात्परं नास्ति कर्मरिष्टि विनाशने ॥ न तुल्यं तथा राज्ञां महोत्पातविनाशनम् ॥ ६२—विद्यार्णवतन्त्रे—विद्रुमे रचिते यन्त्रे पद्मरागेऽथवा प्रिये । इन्दुनीले च वैदूर्ये स्फटिके मरकतेऽपि वा ॥ धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम् । ताम्रं तु कान्तिदं यन्त्रं सुवर्णं शत्रुनाशनम् ॥ ६३—देवस्थाने गुरुस्थाने श्मशाने च चतुष्पथे । पादुकासनविण्मूत्रमैथुनानि विवर्जयेत् ॥ ६४—अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः । अष्टम्यां पूर्णिमायां च तेषु नैमित्तिको जपः ॥ ६५—पुस्तके लिखितं दृष्ट्वा जपेद् य साधकाधमः । चत्वारि तस्य नश्यन्ति आयुः कीर्तिर्यशः श्रियम् ॥ पुस्तके लिखितान्मन्त्रानालोक्य प्रजपन्ति ये । ब्रह्महत्यासमं तेषां पातकं परिकीर्तितम् ॥ ६६—अङ्गप्रत्यङ्गकवचस्तोत्रपाठैर्विना मनुः । असंवृत्तः समाख्यातः सिद्धिं

नैव प्रयच्छति ॥ ६७- मौनं विना जपेन्मन्त्रं राक्षसैर्गृह्यते जपः । मन्त्रोऽपि स्फुटतां याति सिद्धिं नैव प्रयच्छति ॥ ६८—शक्तिसङ्गमतन्त्रे—होमादिकं न सकलं कुमारी-पूजनं विना ॥ परिपूर्णफलं नैव सकलं पूजनाद् भवेत् ॥ ६९—न प्रातर्मृत्तिकास्नानं न कुर्यान्निशिगोमयैः । ७०—प्रत्यक्षं दन्तकाष्ठं च मधुकाष्ठं तु मारणे । मोहने खादिरं प्रोक्तं स्तम्भने चूतपल्लवम् ॥ वश्ये चाश्वत्थकाष्ठन्तु रक्षार्थं वञ्जुलस्य हि ॥ ७१—आत्मस्थानमनुद्रव्यदेहशुद्धिश्च पञ्चमी । यावन्न कुरुते देवि तावद्देवार्चनं न हि ॥ ७२—राजकौस्तुभे—सौवर्णौ कूर्ममकरौ राजतौ मत्स्यदुण्डुभौ । ताम्रौ कुलीरमण्डूकौ आयसः शिशुमारकः । ७३-त्रिरात्रमेकरात्रं वा पञ्चरात्रमथापि वा । सप्तरात्रमथो कुर्यात्क्वचित्सद्योऽधिवासनम् ॥ ७४—काञ्चनं हरितालं च सर्वाभावे विनिक्षिपेत् । दद्याद् बीजौषधिस्थाने सहदेवान् यवानपि ॥ सर्वरत्नस्थाने सुवर्णं क्षिपेत ॥ ७५-पञ्चसूत्रसमायुक्तं शिवलिङ्गं समर्पयेत् । भुक्तिदं मुक्तिदं देवि धनारोग्यसुखप्रदम् ॥ लिङ्गमस्तकविस्तारो लिङ्गोच्छ्रायसमो भवेत् । त्रिगुणः परिणाहश्च तथा पिण्डी प्रतिष्ठिता ॥ लिङ्गतुल्यं प्रणालं स्यात्पञ्चसूत्रस्य लक्षणम् । ७६- श्यामारहस्ये—लवणार्द्रकपिण्याकगोधूममांसपञ्चकम् । लशुनञ्च महादेवि मांसप्रतिनिधौ स्मृतम् ॥ ७७—देवीपूजा सदा कार्या जलजैः स्थलजैरपि । विहितैर्वा निषिद्धैर्वा भक्तियुक्तेन चेतसा ॥ ७८ द्विजानां चैव सर्वेषां दिवाविधिरिहोच्यते । शूद्राणां च तथा प्रोक्तं रात्राविष्टं महाफलम् ॥ ७९—बृहन्नारदीयपुराणे—श्रीमद्भागवतं भक्त्या श्रोतव्यं पुरुषोत्तमे तत्पुण्यं वचसा वक्तुं विधातापि न शक्नुयात् ॥ ८०—सङ्क्रान्तिर्नवमीपूर्णा चाष्टमी च चतुर्दशी । एकादशीव्यतीपाते कर्मलोपं न कारयेत ॥ ८१—वीराणां जपकालस्तु सर्वकालः प्रशस्यते । सर्वदेशे सर्वपीठे कर्तव्यं नात्र संशयः ॥ ८२-तन्त्रराजतन्त्रे—ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयम् । न कुर्यात् गुरुणा सार्धं शिष्यो भूष्णुः कदाचन ॥ ८३—विद्यार्णवतन्त्रे-धनेन्द्रु[illegible]योग्यं परिदीक्षयेत् । देवताशापमाप्नोति कृतं च विकृतं भवेत् ॥ ८४—तत्तु क्वापि शिष्याय मन्त्रं दत्वा पुनस्तं मन्त्रं गुरुर्न जपति नाराधयति च तं पुनरन्यस्मै कस्मै चिन्न [illegible]वचनं सम्प्रदायो वा न दृश्यते । ८५—चन्द्रग्रहे तु या दीक्षा या दीक्षा वनचारिणाम । जनकस्य तु या दीक्षा दारिद्र्यं सप्तजन्मसु ॥ ८६—भूमावेव कृता पूजा पत्रायुर्धननाशिनी । ८७ [illegible]यात्मिका दूर्वाः प्रशस्ता अर्घ्यकर्मणि । ८८—प्राणायामैर्विना यद्यत्कृतं कर्मनिरर्थकम् । अतो यत्नेन कर्तव्याः प्राणायामाः शुभार्थिभिः । ८९—दिक्कालनियमो नात्र तिथ्यादिनियमो न च । न जपे कालनियमो चर्यादिषु बलिष्वपि ॥ स्वेच्छया नियम उक्तश्च महामन्त्रस्य साधने ॥ ९०—अर्धरात्रात्परं यच्च मुहूर्तद्वयमेव च । सा महारात्रिरुद्दिष्टा तद्दत्तं चाक्षयं भवेत् ॥ ९१—पूर्वाशाभिमुखो भूत्वा वश्यकर्माणि पूजयेत् । दक्षिणाशाभिमुखो भूत्वा मारणे पूजयेत्प्रिये ॥ पश्चिमाभिमुखो भूत्वा पूजयेद् धनसिद्धये । उत्तराभिमुखो भूत्वा शान्तिकर्मणि पूजयेत् ॥ ९२—शाक्तप्रमोदे—अनुक्तकल्पे यन्त्रं तु लिखेत्पद्मदलाष्टकम् । षट्कोणकर्णिकं तत्र वेदद्वारोपशोभितम् ॥ ९३—आदौ वेदोदितैर्मन्त्रैः[illegible] । [illegible]चक्राणां मूर्तीनां च विशेषतः ॥ ९४—काष्ठहस्तेन नाचामेत्कदाचित् विधिशङ्कया । प्रायश्चित्तेन युज्येत दूर्वाह तत्र धैव च ॥ ९५—अन्यानि च पवित्राणि कुशदूर्वात्मकानि च । [illegible]पवित्रस्य [illegible] नार्हन्ति वै कलाम् ॥ ९६—प्रणवं पूर्वमुच्चार्य देवीप्रणवमुच्चरेत् । वटुकायेति वै पश्चादापदुद्धारणाय च ॥ कुरुद्वयं ततः पश्चाद् वटुकाय पुनः [illegible] देवीप्रणवमुद्धृत्य मन्त्रोद्धारमिमं [illegible] ॥ ॐ ह्रीं वटुकाय आपदुद्धारणाय कुरु २ वटुकाय ह्रीम् । ९७—आपस्तम्बगृह्ये—त्रिर्देवेभ्यः प्रक्षालयेत्सकृत्पितृभ्यः । ९८—[illegible] रक्तौ श्वेतौ शुक्रनिशाकरौ । सोमपुत्रो गुरुश्चैव तावुभौ पीतवर्णकौ । कृष्णं शनैश्चरं विद्याद्राहुं केतुं तथैव च ॥ ९९—प्रातःकालेऽथवा पूजा समये होमकर्मणि । जपकाले रामस्ते वा विनियोगः पृथक् पृथक् ॥ १००—मनसा विन्यसेत् न्यासान् पुष्पेणैवाथवा मुने । अङ्गुष्ठानामिकाभ्यां वा अन्यथा विफलं भवेत् ॥ १०१ -[illegible] कुर्याद् हेमनिर्मितम् । तेभ्यः स्वल्पतरं न्यूनं न कुर्वीत

वदाचन ॥ अथेष्टेन सुवर्णेन कारयेदङ्गुलीयकम् । इति आचारभूषणोक्तेः । सुवर्णपवित्रेण सुवर्णप्रमाणपेक्षया । ताम्रतारसुवर्णेन मक्षोडशखेन्दुभिः । कृतात्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी ॥ द्व्यङ्गुलं मूलतः कुर्याद् ग्रन्थिरेकाङ्गुलात्तथा । चतुरङ्गुलमग्रं स्यात्पवित्रस्य च लक्षणम् ॥ १०२—वायुपुराणे—दानं प्रतिग्रहो होमो भोजनं बलिरेव च । साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥ साङ्गुष्ठेन अङ्गुलीसहिताङ्गुष्ठेन । १०३—पुरश्चर्यार्णवे—वंशासने तु दारिद्र्यं पाषाणे व्याधिरेव च । धरण्यां तु भवेद्दुःखं दौर्भाग्यं छिद्रदारुजे ॥ तृणे धनक्षयो हानिः पल्लवे चित्तविभ्रमः । गोशकृन्मृन्मयं मिश्रं तथा पालाशपिप्पलम् ॥ लोहविद्धं सदैवार्कं वर्जयेदासनं सुधीः । मृगचर्म प्रयत्नेन वर्जयेत्पुत्रवान् गृही ॥ १०४—खादिरेण स्रुवः कार्यः पालाशी तु जुहूर्भवेत् । तत्प्रदेशे तु बिल्वं स्यात्तु अन्यैर्वा यज्ञियैर्द्रुमैः ॥ तदभावे पलाशस्य पर्णेन हूयते हविः । पलाशपर्णाभावे पर्णैर्वा पिप्पलोद्भवैः । १०५—निष्पीडयित्वा वस्त्रं तु पश्चात्सन्ध्यां समाचरेत् । अन्यथा कुरुते यस्तु स्नानं तस्याफलं भवेत् । १०६—वस्त्रं त्रिगुणितं यस्तु निष्पीडयति मूढधीः । वृथा स्नानं भवेत्तस्य निष्पीडयति चाम्बुनि ॥ १०७—ब्रह्मविष्णुमहादेवाग्निसूत्रीदेवताः स्मृताः । प्रणवो वायुवह्नी च ब्रह्मा नागः शशी रविः । शिवश्च विश्वेदेवाश्च नवसूत्र्यधिदेवताः ॥ १०८—क्रिया च पौरुषी वीरा चतुर्थी चापराजिताः । जया च विजया चैव मुक्तिदा च सदा शिवा ॥ मनोमयी तु नवमी दशमी सर्वतोमुखी । ग्रन्थीनां देवता ह्येतास्तत्र तत्र निवेदयेत् ॥ १०९—स्वस्तिकासनम्—जानूर्वोरन्तरा सम्यक् कृत्वा पादतले उभे । ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते ॥ ११०—पद्मासनम्—ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे । अङ्गुष्ठौ च निबध्नीयात् हस्ताभ्यां व्युत्क्रमात्ततः ॥ १११—भद्रासनम्—सीमन्याः पार्श्वयोर्न्यसेद् गुल्फयुग्मं सुनिश्चलम् । वृषणाधः पार्श्वपादौ पाणिभ्यां परिबन्धयेत् । भद्रासनं समुद्दिष्टं योगिभिः पूजितं परम् । ११२—वीरासनम्—एकपादमधः कृत्वा विन्यस्योरौ तथेतरम् । ऋजुकायो विशेद्योगी वीरासनमितीरितम् ॥ ११३—वज्रासनम्—ऊर्वोः पादौ क्रमान्न्यस्येज्जान्वोः प्रत्यङ्मुखाङ्गुली । करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् ॥ ११४—धर्मसिन्धौ—षडङ्गन्यासः कार्यो न वा कार्यो न्यासविधिरवैदिकत्वादिति गृह्यपरिशिष्टे स्पष्टम् । एतेनाक्षरन्यास-पदन्यासादीनां मुद्रादिविधेः शापविमोचनविधेश्चावैदिकत्वादनावश्यकत्वं वेदितव्यम् ॥ ११५—संस्कारगणपतौ—प्रातस्तु सजलं भस्म मध्याह्ने चन्दनान्वितम् । सायं तु केवलं भस्म शैवधार्यं सदैव तु ॥ ११६—आचारतिलके—ब्राह्मणानां नृपाणां च भस्ममिश्रं च चन्दनम् । ११७—विष्णुस्मृतौ—षडङ्गुलप्रमाणन्तु ब्राह्मणानां त्रिपुण्ड्रकम् । नृपाणां चतुरङ्गुल्यं वैश्यानां द्व्यङ्गुलं तथा ॥ शूद्राणामथ सर्वेषामेकाङ्गुल्यं त्रिपुण्ड्रकम् । ११८—पारिजाते—आचारेन्दौ च—स्नात्वा पुण्ड्रं मृदा कुर्याद् धृत्वा चैव तु भस्मना । देवानभ्यर्च्य गन्धेन जलमध्ये जलेन तु ॥ शिवभक्तस्य त्रिपुण्ड्रं वैष्णवस्योर्ध्वपुण्ड्रमावश्यकमितरेषां तु विकल्पः । ११९—पुरश्चर्यार्णवे—अर्धचन्द्रो गणेशस्य देवीभक्तस्य वर्तुलम् । नारायणपरो यस्तु चन्दनस्य त्रिपुण्ड्रकम् ॥ भाले बिभर्ति वन्द्योऽसौ ब्रह्मविष्णु-शिवात्मकम् ॥ १२०—आचारेन्दौ—सन्ध्यादौ ब्रह्मयज्ञे च होमे देवार्चने तथा । श्रौतमाचमनं प्रोक्तं स्मार्ते स्मार्तं तथा स्मृतम् ॥ पौराणमथवा कार्यं सन्ध्यायां श्राद्धकर्मणि । १२१—शान्तिचिन्तामणौ—अथवा प्रतिमा कार्या लोहमृत्पिण्डदारुभिः ग्रहमूर्तीनामभावे शुक्लतण्डुलैर्ग्रहा स्थाप्याः । १२२—सप्तम्यां भास्करो जातः अष्टम्या च शनिस्तथा । नवम्यां भार्गवो जातो दशम्यां मङ्गलस्तथा ॥ एकादश्यां गुरुर्जातो द्वादश्यां बुधस्तथा । कृष्णचतुर्दश्यां सोमो राहुर्जातस्तु पूर्णिमाम् । १२३—शुक्रस्य पुष्यनक्षत्रं गुरोरुत्तरफाल्गुनी । आदित्यस्य विशाखा च पूर्वाषाढा च भूमिजे ॥ बुधस्य धनिष्ठा च चन्द्रस्यैव तु कृत्तिका । रोहिणी च शने ज्ञेया राहोर्भरणिरुच्यते ॥ आश्लेषा चैव केतूनां ग्रहर्क्षाण्यनुक्रमात । १२४—ग्रहमण्डलम्—हीने कृते भवेद् हानिर्व्याधिः शोकस्तथाधिके । प्रमाणैस्तु भवेत्सिद्धिं तस्मात्प्रामाण्यमालिखेत् । १२५—विष्णुयागपद्धतौ—नित्याक्षतविष्णावे तु षोडशोपचारपूजने । १२६—वीरमित्रोदये—न कार्यं सर्वथा विप्रैः गृहे स्नानाङ्गतर्पणम् । १२७—दानमयूखे—दीना-

॥ ४ ॥

नाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता । न तीर्थे प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि । प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । तत्र न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि । १२९—पूजयन्ति यथा नित्यं शुभं वा यदि वा शुभा । अशुभं नाशयत्येते पूज्यमाना ग्रहा शुभा । वृद्धिं प्रयच्छन्ति तस्माद्यत्नेन पूजयेत् ॥ १३०—ऋषितर्पणाचाण्डालभाषणे शवदाहने । विण्मूत्रोत्सर्जने स्त्रीणां रतिसङ्गे निवीतयः ॥ १३१—मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः । जननं जीवनं पश्चात्ताडनं बोधनं तथा ॥ अथाभिषेको विमलीकरणाप्यायने तथा । तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रिया ॥ १३२—मन्त्रमहार्णवे—स्नान त्रिषवणं प्रोक्तमशक्तौ द्विसकृत्तथा । अस्नातस्य फलं नास्ति न च पितॄन् तर्पयेत् ॥ १३३—वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे । त्रिपुराया जपे शस्ता रुद्राक्षैः रक्तचन्दनैः ॥ १३४—कार्तिकमाहात्म्ये—यत्सेवाकारिणे दत्तं दत्तं वार्धुषिकाय च । दाम्भिकाय च यद्दत्तं यद्दत्तं छद्मकारिणे ॥ तीर्थप्रतिग्राहिणे च यद्दत्तं तीर्थभोजने । धनुर्धराय यद्दत्तं दत्तं यत्प्रेतभोजिने ॥ वैद्यविद्याजीवने च तथा नक्षत्रसूचिने । ईदृशे दीयते दानं येनासौ नरकं व्रजेत् ॥ १३५—अक्षौरे ऽपि च नक्षत्रे कुर्वीत बुधसोमयोः । युक्तोऽपि तिथिनक्षत्रे न कुर्यात् शनिभौमयोः । पुत्रजीवननेन्दो तु न च क्षौरं समाचरेत् । निषिद्धेऽपि दिने क्षौरं कुर्याद्वै बुधशुक्रयोः ॥ १३६—वाराहीतन्त्रे—भीष्मपर्वणि या गीता सा प्रशस्ता कलौयुगे । विष्णोर्नामसहस्राख्यं महाभारतमध्यजम् । चण्ड्याः सप्तशतीस्तोत्रं तथा नाम सहस्रकम् ॥ १३७—शाक्तानन्दतरङ्गिण्याम् रात्रौ रहस्ये पूजायां तुलसी वर्जयेत्सदा । तुलसीघ्राणमात्रेण क्रुद्धा भवति चण्डिका ॥ १३८—अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः । सर्वं तद्विजानीयात्फलं क्रुद्धा भवति चण्डिका ॥ १३९—बृहद्धर्मपुराणे—पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दकः । अदेशी वेदविक्रेता पञ्चैते ब्रह्मघातका ॥ १४०—आयुष्कामः शिरोलेपं मृदा कुर्याद्विजः पुरा । श्रीकामः पादयोः शौचं मृदा पूर्वं समाचरेत् ॥ मृत्तिका तु समुद्दिष्टा त्वार्द्रामलकमात्रिका । १४१—गोमयस्य प्रमाणन्तु येनाङ्गं लेपयेत्ततः । एतच्च मलशोधनं तटे कार्यम् । १४२—मुहूर्तमार्तण्डे—ऋणं भौमे न कुर्वीत न देयं बुधवासरे । ऋणच्छेदं कुजे कुर्यात्सञ्चयं सोमनन्दने ॥ १४३—देवार्चनमन्त्राणां नानध्यायः स्मृतः सदा । १४४—पञ्चनिष्कमितामूर्तिः कर्तव्या वाऽर्धमानतः । अष्टादशभुजादेवी सर्वायुधविभूषिता ॥ १४५—माहेश्वरतन्त्रे—न्यूनाधिकं न कुर्वीत जपं देवि दिने दिने । १४६—नदीतीरे श्मशाने च स्वगृहस्य च दक्षिणे । तुलसीरोपणं कृत्वा याति कर्ता यमालयम् ॥ १४७—अग्निपुराणे—तर्जन्यङ्गुष्ठमाक्रम्य न मेरुं लङ्घयेज्जपे । प्रमादात्पतिते सूत्रे जप्तव्यं तु शतद्वयम् ॥ १४८—पाणौ भूम्याहुतावर्घ्ये पिण्डे प्राणाहुतौ तथा । तर्पणे कन्यकादाने न त्यागः सप्तसु स्मृतः ॥ १४९—स्मृतिमुक्ताफले—यस्मिन्मासि मृताहः स्यात् तन्मासं पक्षमेव वा । क्षुरकर्म न कुर्वीत परान्नं च रतिं त्यजेत् ॥ १५०—मुहूर्तगणपतौ—धावनाद्गुरुवस्त्राणां देवब्राह्मणवन्दनात् । वेदादिश्रवणाद्वापि साधूनामभिभाषणात् ॥ मनः शुद्ध्या जपाद्दानाद् होमाद्ध्वरदर्शनात् । नो कुर्वन्ति ग्रहाः पीडां दुष्टस्थानस्थिता अपि ॥ १५१—अङ्गुष्ठनामिकाभ्यान्तु वश्यकर्मणि तर्पयेत् । अङ्गुष्ठमध्यमाभ्यान्तु शान्तिकर्मणि तर्पयेत् ॥ तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारके । कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत्प्रिये ॥ १५२—देवीरहस्ये—चन्द्रसूर्यग्रहे वाणि ग्रासाद्वाधिविमुक्तितः । यावत्संख्यामनुर्जप्तस्तावद् होमादिकं चरेत् ॥ १५३—बृहन्नीलमणितन्त्रे—शुभे काले शुभे लग्ने शुभर्क्षे च शुभौ तिथौ । प्रतिष्ठां कारयेद्विद्वान्स्वयं वा गुरुणापि वा । होमतर्पयोः स्वाहा न्यासपूजनयोर्नमः ॥ १५५—मध्याह्नसमये देव्याः पूजनं सिद्धिदायकम् । १५६—विद्यार्णवतन्त्रे—नैव निर्वापयेद्दीपं साधकस्तु कदाचन । यस्तु निर्वापयेद्दीपं तस्य लक्ष्मीर्विनश्यति । कूष्माण्डच्छेदका नारी दीपनिर्वापकः पुमान् । विधवा च दरिद्रश्च भवेत्सप्तसु जन्मसु ॥ १५७—काशीखण्डे—रात्रौ न दधि भोक्तव्यं दिवा न नवनीतकम् । १५८—बृहद्ब्रह्मसंहितायाम्—सूतके प्रेतकार्ये च तैलाभ्यङ्गे च भोजने । शयने तुलसीमालामधृत्वैव समाचरेत् ॥ १५९—स्कन्दपुराणान्तर्गतनागरखण्डे—मुहूर्तमपि गीतादि यः करोति शिवालये । न तस्य शक्यते कर्तुं संख्या धर्मस्य भद्रक ॥ १६०—मुहूर्तमपि यो विघ्नं करोति च महोत्सवे । तस्य पापस्य नो संख्या कर्तुं शक्या हि केनचित् ॥

१६१—पुरश्चर्यार्णवे—रक्तवस्त्रं न गृह्णीयात् देवीभक्तिपरायणः । १६२—मेरुतन्त्रे—स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने । प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः ॥ रुद्राक्षधारी भूत्वा यत्किञ्चित्कर्म वैदिकम् । यो विप्रः सततं कुर्यात्तत्कर्म सफलं भवेत् ॥१६३—शान्तौ कुशासनं ग्राह्यं होमयेन्मृगमुद्रया ॥ १६४—पार्थिवं रचयेल्लिङ्गं न न्यूनं नाधिकं क्वचित् । पक्वजम्बूफलाकारं सर्वकामसमृद्धदम् ॥ अतिपुष्टे तु दारिद्र्यं चिपटे रोगसंभवः । मानाधिके वियोगः स्यात्स्वल्पे सिद्धिर्न जायते ॥ द्विखण्डे न भवेन्मृत्युर्वियोगो न सुखं भवेत् । १६५—औपधेऽध्ययने वादे वाहनेशयनेऽशने । बीजवापे बुधैः प्रोक्तं शोभनं सप्तसु स्मृतम् ॥ मृत्युर्वह्निभयं हानिस्तुष्टिर्द्रव्यागमः सुखम् । क्लेशोऽर्थागमनं प्रोक्तं दिनु क्रियाफलं क्रमात् ॥१६६—[illegible]ाङ्गुष्ठकनिष्ठाभ्यां मूले साग्रं कुशत्रयम् । तदग्रैः कृत्स्नरजसां पूर्वस्याभ्यपसारणम् ॥ १६७—कर्तव्यं दक्षिणारम्भं त्रिरुदक्संस्थमेव च । गोमयोदकमादाय तेन निरुपलेखनम् ॥ १६८—आज्यस्थाली अर्थात्परिमाणमिति कार्या महारुद्रादिके तयोः । १६९—पवित्रोपरि कुशावग्रे हित्वा प्रादेशमात्रके । मूलभागे छेदकानां कुशानां स्थापनं तयोः ॥ द्विमूलेन द्वयोः कृत्वा वेष्टनं च प्रदक्षिणम् । छेदकान् छेदमूले च धृत्वा दक्षिणहस्तके ॥ वामे धृत्वा पवित्राग्रावुदगग्रौ कुशौ तथा । अङ्गुष्ठानामिकाभ्यां तु छेदयेदस्पृशन्नखैः ॥ ततो दक्षिणहस्तस्थाभ्यां कुशांस्त्यजेत् । १७०—अग्नेरुल्मुकमादाय प्राक्स्यैशानकोणतः । पुनरीशानकोणान्तमाज्यादिपङ्क्तिः शनैः ॥ प्रदक्षिणं भ्रामयित्वा वह्निमध्ये च तत् क्षिपेत् ॥ १७१ ततो दक्षिणहस्तेन स्रुवमादाय तं ततः । तापयित्वा यथान्यायं प्राङ्मुखमग्नावधोमुखम् ॥ सव्ये धृत्वा तमुत्तानपुष्करं दक्षिणेन तु । कुशानादाय संमार्गास्तदग्रैरुपरिक्रमात् ॥ मूलादाभ्यन्तरक्रान्तं संमृज्य स्रुवतः परः । तन्मूलैर्मूलपर्यन्तं संमृज्याधोऽपि तां त्यजेत् ॥ १७२—आज्यमुत्थाप्य चानीय चरोः पूर्वेण तच्छनैः । वन्हेरुत्तरदिग्भागे स्थापयेत्तु खगाद्बहिः ॥ चरुमुत्थाप्य चानीयापरेणाज्यं तदुत्तरे । स्थाप्यानुष्ठानसौख्याय स्वपुरोऽग्नेस्तु पश्चिमे ॥ आज्यादीनि स्थापयन्ति सौम्यदिक्स्थानि याज्ञिकाः । १७३—गृहनिर्गमवामे च वसोर्द्धारा च वेदिका । कार्या विवाहे विद्वद्भिर्गृहे वै पूर्वदक्षिणे ॥ गृहे वै पश्चिमे द्वारे तथा उत्तर एव च । वेदिका च वसोर्द्धारा गृहनिर्गमदक्षिणे ॥ १७४—सपवित्रेण हस्तेनाशेषं तु प्रोक्षणीजलम् । गृहीत्वा तेन कर्तव्या वन्हेः पर्युक्षणक्रिया ॥ ईशानीं दिशमारभ्य पुनरीशानकोणगा । स्थापयेच्च प्रणीतासु पूर्वाग्रे ते पवित्रके ॥ १७५—हीयते यजमानो वै स्रुवमूलस्य दर्शनात् । तस्मात्संगोपयेन्मूलं प्रयत्नेन तु ॥ १७६—चतुर्दशसु चैतासु कर्तुर्दक्षिणहस्तकः । अन्वारम्भं कुशैः कुर्याद् ब्रह्मा नान्यत्र संस्मृतः ॥ आघारौ नासिके ज्ञेयावाज्यभागौ च चक्षुषी । वक्त्रोदरं च कुक्षिण्यौ करिव्याहृतयोः स्मृताः ॥ शिरोहस्तौ च पादौ च पञ्चवारुणके स्मृतम् । प्रजापत्यं स्विष्टकृत् श्रोत्रे द्वे च प्रकीर्तिते । १७७—प्रत्याहुतिं च सर्वासामाहुतीनां तु संस्रवम् । स्थापयेत्तत्र होमान्ते विधानात्प्राशनस्य तु ॥ १७८—पूर्वाघारो नैर्ऋतस्तु कोणादीशानकोणतः । होतव्यो वायुकोणात्तु वन्हिकोणान्तमुत्तरः ॥ अग्नेरुत्तरपूर्वार्द्धे आग्नेयमाज्यभागकम् । सौम्यं दक्षिणपूर्वार्द्धे । १७९—यावद्विरुत्तरार्द्धादवदाय तदाहुतिम् । जुहुयादुत्तरार्द्धेऽग्नावसंसृष्टां हुतेन तु ॥ १८०—प्रणीतामोचनं कुर्यादग्नेः पश्चिमहस्ततः । १८१—आज्यभिन्नं यदा होमद्रव्यं स्याद्विधिबोधितम् । महाव्याहृतिहोमात्प्राक् तदा स्विष्टकृदाचरेत् ॥ ततो व्याहृतिहोमादि सर्वं होमे समापयेत् । १८२—आज्यमेव यदा होमद्रव्यं स्याद्विधिबोधितम् । तदा सकलहोमान्ते स्विष्टकृद्धोममाचरेत् ॥ होमान्ते संस्रवं प्राश्याचम्य संमार्जयेत्ततः । यथा[illegible] पवित्राभ्यां वन्हौ ते प्रक्षिपेत्ततः ॥ १८३—योनि त्वं विश्वरूपासि प्रकृतिर्विश्वधारिणि । कामदा कामरूपा च विश्वयोन्यै नमो नमः ॥ १८४—नाभेः त्वं कुण्डमध्ये तु सर्वदेवैः प्रतिष्ठिता । अतस्त्वं पूजिता देवि शुभदा ऋद्धिदा भव ॥ ततः कुण्डमध्ये निर्ऋतिकोणे वास्तुपुरुषं पूजयेत् । आवाहयामि देवेशं वास्तुदेवं महाबलम् ॥ देवदेवं गणाध्यक्षं पातालतलवासिनम् । १८५—ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् । ईश्वरैरपि भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ १८६—सिंहे गुरुस्तथादित्ये चन्द्रश्चन्द्रक्षयस्तथा । गोदावर्यां [illegible] कुम्भः संप्राप्तेऽवनिमण्डले ॥ १८७—संन्दारगणपतौ—

पलमेकं दुग्धभागं गोमूत्रं तावदिष्यते । घृतं च पलमात्रन्तु गोमयं तोलकद्वयम् ॥ दधिप्रसृतिमात्रं स्यात्पञ्चगव्यमिदं स्मृतम् । अथवा पञ्चभागानां समानो भाग इष्यते ॥ १८८—एका
चण्ड्यां रवौ सप्त तिस्रो दद्यात् विनायके । चतस्रः केशवे दद्यात् शिवे चार्धप्रदक्षिणाम् ॥ अर्धं प्रदक्षिणापि देवालये न गृहे तत्र वृषचण्डाद्यभावात् । १८९—स्मृतिसारे—अशक्तौ निर्जने देशे
मृतौ जाते च सूतके । जपेच्च मानसीं सन्ध्यां कुशवारिविवर्जिताम् ॥ १९०—गायत्रीपुरश्चरणे —राष्ट्रभङ्गे नृपक्षोभे रोगार्तौ सूतकेऽपि वा । सन्ध्यावन्दनविच्छित्तिर्न दोषाय कथञ्चन ॥ विद्रुत्सङ्के
विवादे च यज्ञे भूपतिदर्शने । सन्ध्यावन्दनलोपोऽयं न दोषो मुनिभिः स्मृतः ॥ १९१—तिलास्तु द्विगुणा प्रोक्ताः यवेभ्यश्चैव सर्वदा । अन्ये सौगन्धिकाः स्निग्धाः गुग्गुलाद्यायवैः समाः ॥
आयुः क्षयो यवाधिक्ये यवमाल्ये धनक्षयः । सर्वकामसमृध्यर्थं तिलाधिक्यं सदैव हि १९२ -छर्दिते स्नानसङ्कल्पे क्षुरकर्मणि मैथुने । दुःस्वप्ने दुर्जनस्पर्शे षट्सु स्नानं विधीयते ॥ अजीर्णे
क्षुदिते वान्ते श्मश्रुकर्मणि मैथुने । दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥ १९३—अन्नहीनस्तु यो होमो राज्यनाशाय कल्पते । तस्मादन्नं प्रदातव्यं सर्वभूतेषु यत्नतः ॥
१९४—ॐ नमः शिवाय—सर्वपापविनिर्मुक्तः प्राप्नुयाद्वाञ्छितं श्रियम् । द्विमन्त्रं जपेद्रोगान्मुच्यते नात्र संशयः ॥ त्रिसहस्रं जपेन्मन्त्रं दीर्घमायुरवाप्नुयात् । सहस्रवृद्ध्या प्रजपेत्सर्वान्कामा-
नवाप्नुयात् । १९५—माहेश्वरतन्त्रे—उष्णज्वरे महेशस्य प्रकुर्यादभिषेचनम् । शीतज्वरे तथा कुर्यादभिषेकं हरेर्बुधः ॥ कर्मविपाके—माङ्गल्येषु च कार्येषु सततं कोपवाचरः । उष्णज्वरविभूतः
स्यात्तत्पापस्यापनुत्तये ॥ सहस्रकलशस्नानं रुद्रेशेशस्य कारयेत् । ब्राह्मणान् भोजयेच्छक्त्या जपेद्वै जातवेदसम् ॥ महार्णवे- देवविग्रहणाच्चैव जायते विनिधज्वरः । ज्वरो महाज्वरश्चैव
रौद्रो वैष्णव एव च ॥ ज्वरे रुद्रजपं कुर्यान्महारुद्रं महाज्वरे । महारुद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत् ॥ १९६-असाध्यस्यापि रोगस्य प्रायश्चित्तं समाचरेत । सर्वरोगविनाशाय जयः कार्यो
विशेषतः ॥ मृत्युञ्जयस्य रुद्रस्य होमं कुर्याद्दशांशतः । आगमोक्तविधानेन रोगनाशो भवेद्ध्रुवम् ॥ सर्वरोगोपशान्त्यर्थमभिषेकं समाचरेत् । सहस्रकलशैः स्नानं विष्णोर्वा शङ्करस्य च ॥
देवमभ्यर्च्य विप्रेभ्यो दद्यान्मिष्टान्नभोजनम् । तेभ्यश्च दक्षिणां दत्वा रोगेभ्यो मुच्यते ध्रुवम् ॥ कार्यः षडङ्गरुद्रस्य जपो वा रोगशान्तये । महारुद्रविधानेनासाध्यो रोगोऽपि शाम्यति ॥
अपामार्जनसंज्ञेन मालामन्त्रेण मार्जयेत् । मार्जनाद्रोगिणः सर्वे रोगा नश्यन्त्यसंशयम् ॥ अच्युतानन्दगोविन्देत्येवं नामत्रयं हरेः । सर्वरोगोपशान्त्यर्थं सततं व्याधिमान् जपेत् ॥ सर्वेषु
ज्ञातरोगेषु प्रदद्यात्सततं नरः ॥ पानीयं पायसं मुद्राः शर्करां घृतसंयुताम् ॥ प्रतिकूलग्रहाणां च जपं होमं च पूजनम् । तद्दोषविनाशार्थं दानं कुर्याद्यथोचितम् ॥ प्रतिरोगं च यद्दानं जपहो-
मादिकीर्तितम् । प्रायश्चित्तं तु तत्कृत्वा चिकित्सामारभेत्ततः ॥ प्रदद्यात्सर्वरोगघ्नं छायापात्रं विधानतः । १९७--ब्रह्मयामले -षडङ्गुलाधिके यत्र प्रतिमे धातुनिर्मिते । नित्यं न स्नपयेत् गङ्गा
न तु दोषः शिवालये ॥ १९८—बिल्वपत्रैरखण्डैर्यः सकृद्देवीं प्रपूजयेत् । सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात् ॥ १९९ -वाराहे--वस्त्रप्रावृतदेहस्तु यो नमेद्देवतां नरः । स तु सञ्जायते मूर्खः
सप्तजन्मसु दुःखभाक् ॥ २००—शौनकः—रुद्राक्षैर्विद्रुमैर्वापि स्फाटिकैर्वापि कल्पिता । माला ग्राह्या न काष्ठादिकल्पिता विफला यतः ॥ तुलसीकाष्ठघटितैर्मणिभिर्जपमालिकेतिरामार्चनचन्द्रि-
कोक्तिर्वैष्णवविषयेति केचित् । २०१—उपाकर्मणि चोत्सर्गे गते मासचतुष्टये । नव यज्ञोपवीतानि धृत्वा जीर्णानि सन्त्यजेत् ॥ उपाकर्मणि चोत्सर्गे सूतके द्वितये तथा । श्राद्धकर्मणि यज्ञादौ
शशिसूर्यग्रहेऽपि च ॥ २०२—देवीभागवते—चैत्रेऽश्विने तथाऽऽषाढे माघे कार्यो महोत्सवः । नवरात्रे महाराज पूजा कार्या विशेषतः ॥ २०३ -दानसंग्रहे—देवशय्याशिरः प्राच्यामवाच्यां तु
मुखे शिरः । प्रतीच्यां तीर्थशय्याया उदीच्यां प्रेमकर्मणि ॥ २०४-तन्त्रचिन्तामणौ—कुशोदकैः पञ्चगव्यैर्मालां प्रक्षालयेत्सुधीः । अश्वत्थपत्रनवके मालां संस्थापयेत्ततः ॥ मातृकास्तत्र विन्यस्य
सद्योजातादिपञ्चभिः । अभिमन्त्र्य ततो मन्त्रैर्मालां सम्यक् प्रपूजयेत् । २०५—दृष्टफलमनुः —अक्षेणाच्छाद्य च करं दक्षिणं यः सदा जपेत् । तस्य स्यात्सफलं जाप्यं तद्धीनमफलं स्मृतम् ॥

२०६—संमोहनतन्त्रे—चतुर्भिर्वा त्रिभिर्वापि द्वयेनैकेन वा पुनः। सर्वैरावर्णैरेव भोगार्थी विस्तरे न्यसेत् ॥ २०७—उत्तरतन्त्रे—तत्राङ्गुलीभिन्यासः स्याच्छिरस्येकैव मध्यमा। तर्जनीमध्यमाभ्यां तु चक्षुसोर्न्यास उच्यते ॥ अङ्गुष्ठानामिकाभ्यां तु मुखे न्यासः प्रकीर्तितः। हृदये ज्ञानमुद्रा स्यादङ्गुष्ठश्च कनिष्ठका ॥ नाभौ प्रकीर्तिता गुह्ये अनङ्गुष्ठाः प्रकीर्तिताः। सर्वाजानौ च पादे च पञ्चापि परिकीर्तितः। २०८ अर्घ्यपात्रं तु वायव्ये नैरृत्यां पाद्यपात्रकम्। आग्नेय्यां स्नानकलशं ईशे त्वाचमनीयकम् ॥ मध्ये तु मधुपर्कं स्यादित्येतत्पात्रलक्षणम्। २०६—कार्तिके मार्गशीर्षे वा माघे वैशाख एव च। श्रावणे बहुले पक्षे व्रतस्यारम्भणं शुभम् ॥ २१०—एता मुद्राश्चतुर्विंशद्गायत्र्याः सुप्रतिष्ठिताः। वृथा मन्त्रजपश्चैव स्नानं भोजनमेव च ॥ तथा वै तीर्थयात्रा च मुद्राहीने वृथा हि सा। यज्ञश्च निष्फलस्तेषां होमो देवार्चनं तथा ॥ तस्मान्मुद्रा महाज्ञेया विद्वद्भिर्यत्नमास्थितैः। २११—गृहीससंपुटं कुर्यान्मोक्षार्थं संपुटं विना' इतिवाराहीतन्त्रोक्तत्वात् गृहस्थः संपुटं विना न पठेत्। अत्र सावर्णिः सूर्यतनयः' इत्यादि सावर्णिर्भवितामनुरित्यन्तं पाठक्रमः। कश्यपसंहितायाम्—२१२—नमः पक्षिराजाय वेदपक्ष-युग प्रभो। वैनतेय नमस्तेऽस्तु मरुताय नमो नमः ॥ २१३—त्रिस्थलीसेतौ— सदा कृतयुगं चास्तु सदा चास्तूत्तरायणम्। सदा महोदयश्चास्तु काश्यां निवतां सताम् ॥ सदा कृतयुगं चात्र महापर्वसदात्र वै। न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये ॥ सदा सौम्यायनं तत्र सदा तत्र महोदयः। सदैव मङ्गलं तत्र यत्र विश्वेश्वरस्थितिः ॥ २१४—दातव्यमिति काश्यां नो वक्तव्यं मनुजैः क्वचित्। अहोरात्रमतिक्रम्य तद्दानं द्विगुणं भवेत् ॥ दशोत्तरं पर्वसु च शतं चन्द्रग्रहे भवेत्। सूर्यग्रहे सहस्रं तु मरणेऽनन्तकं स्मृतम् ॥ तस्माद्दातव्यमित्युक्तं देयमेव न चान्यथा। बुधैस्तदेव वक्तव्यं दातुं शक्यं यदैव हि ॥ २१५—पूजयित्वा महादेवं काशीनाथं जगद्गुरुम्। प्रदक्षिणात्रयं कृत्वा प्रणमेद्दश पञ्च वा ॥ २१६—अग्रे पृष्ठे तथा वामे समीपे गर्भमन्दिरे। जपहोमनमस्कारान्न कुर्याद्देवतालये ॥ अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः। वामभागे भवेन्नाशो दक्षिणे सर्वकामदः ॥ २१७—यावन्न दीयते चार्घ्यं भास्कराय दिने दिने। तावन्न पूजयेद्विष्णुं शङ्करं वा सुरेश्वरीम् ॥ २१८—पश्चिमद्वारमारभ्य द्वारपाला अमीक्रमात्। नन्दी चैव महाकालो गणेशो वृषभस्तथा ॥ ततो भृङ्गिरिटिस्कन्दावुमा चण्डेश्वरौ ततः। एते चाष्टौ महेशस्य द्वारपालाः प्रकीर्तिताः ॥ २१६—नन्दः सुनंदचण्डौ च प्रचण्डबलसंज्ञकौ। प्रबलो भद्रनामा च सुभद्रश्चाष्टमः स्मृतः ॥ क्रमादमी समभ्यर्च्या वैष्णवद्वारपालकाः ॥ २२०—वक्रतुण्डैकदंष्ट्रौ च महोदरगजाननौ। लम्बोदरश्च विकटो विघ्नराजस्ततः परम् ॥ धूम्रवर्णाश्च संप्रोक्ता विघ्नेशद्वारपालकाः। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही च तथेन्द्राणी चामुण्डा च श्रिया सह। एता देव्या क्रमादष्टौ शक्तयो. द्वारपालकाः ॥ २२१—मण्डपाभ्यन्तरे विद्वान् वामपादपुरः सरम्। प्रविश्य विघ्नान् त्रिविधान् पातालवन्तरिक्षगान् ॥ उत्सार्यास्त्रं समुच्चार्य पार्ष्णिघातादिभिस्त्रिभिः। २२२—विघ्नानुत्सार्य विधिवद् द्वारमाच्छाद्यवाससा। पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेन्मण्डपान्तरम् ॥ २२४—भैरवीतन्त्रे—मेरुपृष्ठऋषिः प्रोक्तः सुतलं छन्द ईरितम्। पृथिवीदेवता प्रोक्ता विनियोग निजासने ॥ २२४—गौतमीतन्त्रे— उदङ्मुखः प्राङ्मुखो वा भुत्वा प्रयतमानसः। स्वस्तिकासनमासीनः पद्मासनमथापि वा ॥ इत्यादि। २२५ देवीरहस्ये—ऋषिहीनो भवेन्मन्त्रो जप्तो जन्मान्तरेषु च। प्रत्यवायकरो लोके साधकानां महेश्वरि ॥ २२६—बीजहीनो भवेन्मन्त्रः सिद्धिहानिः करः शिवे। २२७—पर्वताग्रे नदीतीरे देवतायतने तथा। एकान्ते च शुचौ देशे जपन्नियतमानसः ॥ ब्रह्मचर्यधरो वीरो मिताहारो जितेन्द्रियः। अमृतं मत्सरं दम्भं त्यजेत्प्रतिग्रहं तथा ॥ २२८—पञ्चकृतानि लोकेऽस्मिन् पुरश्चरणमुच्यते। यद्यत्संख्यं विहीयते तत्संख्याद्विगुणं जपः ॥ २२६—जपकाले महेशानि भार्यां यत्नेन वर्जयेत्। २३०—प्रतिमां कारयेद्देवी पलेन रजतस्य च। पलार्धेन महेशानि साध्यस्य प्रतिमां शिवे ॥ २३१ बलिं विना महादेव्याः हिंसा सर्वत्र वर्जिता। २३२—स्वर्णपात्रेऽथवा भूर्जे रौप्ये वा पथ सुव्रते। विलिखेद् हेमलेखन्या गन्धाष्टकसमन्वितम् ॥ दूर्वाकाण्डेन संलिप्य कुशमूलेन वा

पुनः। २३३-रात्रौ यदि जपेद् मन्त्रं स च कल्पद्रुमो भवेत्। तिथिक्रमेण देवेशि लचाया वेष्टितो भवेत्॥ तथामासेन सिद्धिः स्यात्करहस्तजपमानतः। अष्टम्यां च चतुर्दश्यां द्विगुणं यदि जप्यते॥ तदेव महतीसिद्धिर्देवानामपि दुर्लभः। २३४—कुमारीं पूजयेद् यत्नैर्द्रव्यैर्बहुविधैरपि। होमादिकं तु सकलं कुमारीपूजनं भवेत्। एकं द्वाभ्यां त्रिभिश्चैव सप्तभिर्वाष्टभिः पुनः॥ महाभयानि दुर्भिक्षाद्युत्पातानि कुलेश्वरि। दुःस्वप्नमपमृत्युश्च अन्ये ये ये समुद्भवाः॥ कुमारीपूजनादेव न तस्य प्रभवन्ति हि। २३५—आचम्य प्राङ्मुखो भूत्वा दिवसे परमेश्वरि। रात्रौ उदङ्मुखः कुर्याद् आह्निकं प्रियमुत्तमम्॥ २३६—एष्टव्या बहव पुत्राः अप्येकः कुलं वसेत्। किं गया पिण्डदानेन किं काशीगमनेन च॥ यदि भाग्यवशेनैव कालीं सरस्वतीं शिवे। अन्नपूर्णां महादेवीं पूजयति गृहाङ्गणे॥ स ब्राह्मणः स वेदज्ञः स वशी स च साधकः। २३७—अहिर्बुध्न्यसंहितायाम्—वेदवेदान्ततत्त्वज्ञो विद्यास्थानविचक्षणः। ऊहापोहनिधानज्ञो दैवपित्र्यक्रियापरः॥ अवक्ता चापवादानामकर्ता पापकर्मणाम्। अमत्सरी परोत्कर्षे परदुःखे घृणापरः॥ दयावत्सर्वभूतेषु हृष्टः परसुखोदये। पुण्येषु मुदितायुक्त उपेक्षावान्कुबुद्धिषु॥ तपः सन्तोषशौचाढ्यो योगस्वाध्यायतत्परः। पञ्चरात्रविधानज्ञस्तन्त्रान्तरविचक्षणः॥ सामान्यस्यापवादस्य वेत्ता यन्त्रविचक्षणः॥ कुण्डमण्डलभेदज्ञः क्रियाकरिविचक्षणः॥ अध्यात्मज्ञानकुशलः शान्तो दान्तो जितेन्द्रियः। सदन्ववायसंभूत आचार्यो नाम वैष्णवः॥ २३८—विष्णुधर्मोत्तरे— पुष्पाभावे हि देयानि पत्राण्यपि जनार्दने। पत्राभावे पयो देयं तेन पुण्यमवान्पुयात्॥ २३९—हेमाद्रौ- विवाहमेखलाबन्धप्रतिष्ठादिषु कर्मसु। आपन्नेषु तु यद्क्षमक्षयं तदुदाहृतम्॥ २४०—मेरुतन्त्रे—एषां जपे च होमे च सङ्ख्यानोक्ता मनीषिभिः। तेषामष्टसहस्राणि सङ्ख्यास्याज्जपहोमयोः। २४१—आदौ कच्छस्ततो नीवी नाभिमध्ये च वाससी। नीवीदक्षिणतः स्थाप्या एतत्त्रिकच्छलक्षणम्॥ २४२—शयनं चार्द्रपादेन शुष्कपादेन भोजनम्। नोत्तरीयमधः कुर्याद्रात्रिवासस्तद्वा दिवा॥ कटिवेष्ट्यं तु यद्वस्त्रं पुरीषो येन वा कृतः। मूत्रमैथुनकृद्वस्त्रं धर्मकार्ये विवर्जयेत्॥ २४३—चतुर्भिः शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा। पैतृकं तु त्रि दर्भाश्च द्वौ दर्भौ नित्यकर्मणि॥ २४४-विष्णुधर्मोत्तरे। तिलकं कुङ्कुमे नैव सदा मङ्गलकर्मणि। कारयित्वा सुमतिमाञ्श्वेतचन्दनं मृदा॥ २४५-न च स्मरेद्दूर्ध्वर्षि छन्दः श्राद्धे वैतानिके मुख्ये अग्निहोत्रे वैश्वदेवे विवाहादिविधौ तथा॥ होमकाले न दृश्यन्ते प्रायश्छन्दर्षिदेवताः॥ २४६-कुशवटुः—सप्तभिर्नवभिर्वाऽपि सार्द्धद्वितयवेष्टितम्। ॐ कारेणैव मन्त्रेण द्विजः कुर्यात्कुशद्विजम्॥ २४७-जयर्गिंहकल्प[illegible] शिवागारे झल्लकंच सूर्यागारे च शंखकम्। दुर्गागारे वंशवाद्यं मधुरीं न च वादयेत्॥ २४८-न जीवित्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्। २४९-सङ्कल्पं सूक्तपठनं मार्जनं चाघमर्षणम्। देवादितर्पणं चैव गृहे पञ्च विवर्जयेत्॥ इति सङ्कल्पनिषेधस्तु मध्ये सङ्कल्पकरणपरः इत्याचारभूषणे। २५०—संवर्तः-सन्ध्याकाले पितृश्राद्धे वैश्वदेवे शिवार्चने। यतिं च ब्रह्मचारी च नाचामेच्चर्मवारिणा॥ पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित्। त्रिरात्रं च व्रतं कुर्याद्वामहस्तेन वा पुनः। वामहस्ते कुशान् कृत्वा समाचामति यो द्विजः। उपरपृष्टं भवेत्तेन रुधिरेण मलेन वा। कांस्यासनेन पात्रेण त्रपुसीसकपित्तलैः। आचान्तः शतकृत्वोऽपि न कदाचिच्छुचिर्भवेत्॥ २५१-देवलः न शंखेन पिबेत्तोयं न खादेत्कूर्मशूकरौ। २५२-दीर्घकाष्ठे शिलापृष्ठे नौकायां शकटे तटे। विवाहे बहुसंपर्के स्पर्शदोषो न विद्यते॥ २५३-संस्कारभास्करे—खल्वाटादिदोषेण विशिखश्चेन्नरो भवेत्। कौशीं तदा धारयीत ब्रह्मग्रन्थियुतां शिखाम्॥ २५४-वायुपुराणे-निवासा

ये च कीटानां लताभिर्वेष्टिताश्च ये । अयज्ञिया गर्हितास्च वल्मीकैश्च समावृताः । शकुनीनां निवासाश्च वर्जयेत्तान महीरुहान् ॥ अन्यांश्चैव विधानज्ञान् यज्ञियांश्च विवर्जयेत् । २५५—ऊर्ध्वपुण्ड्रं मृदा कुर्याद् भस्मना तु त्रिपुण्ड्रकम् । मध्याह्नात्प्राग्जलैर्युक्तं परतो जलवर्जितम् ॥ २५६-शमीपत्राणि दूर्वाश्च भृङ्गराजस्तथैव च । सुप्ते देवे न देयानि निद्राभङ्गकराणि वै ॥ २५७—रत्नकोषे—प्रथमं देहशुद्धिः स्यात्स्थानशुद्धिरनन्तरम् । पात्रशुद्धिस्तृतीया तु आत्मशुद्धिः चतुर्थिका ॥ पञ्चमी बिम्बशुद्धिः स्याच्छुद्धयः पञ्च वै स्मृताः ॥ बिम्बशुद्धिर्देवप्रतिमादिशुद्धिः । २५८—मनुः—मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि । चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन च ॥ चरूणां स्रुक्स्रुवाणां च शुद्धिरुष्णेन वारिणा । स्फ्यशूर्पशकटानां च मुसलोलूखलस्य च ॥ अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् । प्रक्षालनेन स्वल्पानामद्भिरेवविधीयते ॥ २५९—कालिकापुराणे- दीपवृक्षाश्च कर्तव्यास्तैजसाद्यैश्च भैरव । वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन ॥ २६०—संस्कारगणपतौ-घण्टानादं विनाधूपं न विद्वान् दातुमर्हसि । २६१—निर्णयसिन्धौ—रुद्राक्षकण्ठदेशे दशनपरिमितान्मस्तके विंशतिद्वे षट्कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव ॥ बाह्वोरिन्दोः कलभिर्नयनयुगकृते एकमेकं शिखायां वक्षस्यष्टाधिकं यः कलयति शतकं सस्वयं नीलकण्ठः ॥

